॥ श्रीः ॥

# श्रीदक्षिणामूर्तिस्तोत्रं

श्रीमच्छङ्कराचार्यविरचितम्

श्रीस्वयम्प्रकाशयतिविरचितलघुतत्त्वसुधा-
निधिव्याख्यया-समेतम्-(आदौ)

तथाग्रे-तदेव स्तोत्रं

श्रीरामतीर्थयतिविरचितमानसोल्लास[संग्रह]वृत्तान्त-
[विलास]नामकव्याख्यासमलङ्कृतश्रीमत्सुरेश्व-
राचार्यविरचितभावार्थवार्तिकसंशोभितं च

संशोध्य

## पण्डित-ज्येष्ठाराममुकुन्दजीशर्मणा

मुम्बय्यां

संवत् १९६० शाके १८२५.

॥ श्रीः ॥

# श्रीदक्षिणामूर्तिस्तोत्रं

## श्रीमच्छङ्कराचार्यविरचितम्

श्रीस्वयम्प्रकाशयतिविरचितलघुतत्त्वसुधा-
निधिव्याख्यया-समेतम्-( आदौ )

**तथाग्रे=तदेव स्तोत्रं**

श्रीरामतीर्थयतिविरचितमानसोल्लास[ संग्रह ]वृत्तान्त-
[ विलास ]नामकव्याख्यासमलङ्कृतश्रीमत्सुरेश्व-
राचार्यविरचितभावार्थवार्तिकसंशोभितं च

**संशोध्य**

## पण्डित-ज्येष्ठाराममुकुन्दजीशर्मणा

---

**मुम्बय्यां**

निर्णयसागराख्यमुद्राक्षरयन्त्रालये

मुद्रापितं सद्द्विजयते

---

संवत् १९५९ शाके १८२५.

## लघुतत्त्वसुधाव्याख्यासमेतदक्षिणामूर्तिस्तोत्रस्य विषयसूची—


१ प्रथमश्लोकस्तद्व्याख्या च सर्वजगदधिष्ठानमीश्वरः

५ द्वितीयश्लोकावतरणिका

७ द्वितीयश्लोकस्तद्व्याख्या च आत्मैव जगदुत्पत्त्यादिकारणम्

८ तृतीयश्लो० व्या० असद्वादनिराकरणम्

११ चतुर्थश्लो० व्या० आत्मसत्ताप्रकाशाभ्यामेव जगतः सत्ताप्रकाशौ

१४ पञ्चमश्लो० व्या० चार्वाकादिमतखण्डनम्

१५ षष्ठश्लो० व्या० शून्यवादिमतनिराकरणम्

१७ सप्तमश्लो० व्या० प्रत्यगात्मपरमेश्वराभेदज्ञानं श्रुतिगुर्वीश्वरप्रसादलभ्यम्

१८ अष्टमश्लोकावतरणिका

१९ अष्टमश्लोकस्तद्व्याख्या च सर्वो व्यवहारो माययात्मसाक्षात्कारान्तम्

२० नवमश्लो० व्या० अधिकारिभेदेनात्मसाक्षात्कारसाधनभेदनिरूपणम्

२२ दशमश्लो० व्या० एतत्स्तोत्रपाठादिफलानि


## मानसोल्लाससंग्रहवृत्तान्तविलासव्याख्यासहितभावार्थवार्तिकयुतदक्षिणामूर्तिस्तोत्रस्य विषयानुक्रमणिका—


२४ मङ्गलम्

२५ विषयप्रयोजने

,, अस्य प्रकरणत्वस्फुटीकरणम्

२६ ब्रह्मणः अस्तित्वप्रकाशत्वाधिष्ठानप्रश्नाः (तत्प्रतिव्यक्तिभिन्नमभिन्नं वेत्यादिरूपाः)

,, ईशत्वं जीवत्वमात्मत्वं च किंरूपमिति प्रश्नाः। ईशत्वं ताटस्थ्येनाधिष्ठानत्वेन वा। जीवत्वं स्वाभाविकं सोपाधिकं वा। सर्वात्मत्वं गौणं मुख्यं वा।

२७ जीवस्य कीदृशं ज्ञानमीश्वरत्वजीवत्वसर्वात्मत्वज्ञानजनकम्

,, तत्र साधनं किमिति साधनविषयकः प्रश्नः

,, तत्र फलं किमिति फलविषयकः प्रश्नः (तत्फलं यत्नसाध्यं न वा।

,, जीवेश्वरयोरैक्यविषयकः प्रश्नः (तदेकत्वं गौणं मुख्यं वा)

२८ जीवस्य सर्वकर्तृत्वं सर्वात्मत्वं च कथमिति शङ्का
,, सर्वकर्ता सर्वात्मा च जीवः कथं स्यादिति शङ्का
,, तत्रोत्तरत्वेन मूलश्लोकः प्रथमः तद्व्याख्या च
२९ ईश्वरः( सत्तास्फुरणयोर्निरपेक्षाधिष्ठानम् ) स एवात्मा
,, आत्मनः परिणामित्वनिरासः
३० आत्मान्तःस्थमेव विश्वं बहिष्ठमिव मायावशाद्भासते
३१ जगत्सत्ता आत्मैकायत्ता
३२ जगत्स्फुरणमात्मैकायत्तम्
३३ विश्वदर्शनं मायिकम्
,, आत्मसत्तास्फुरणे नित्ये
,, अद्वैतज्ञानोदयप्रकारः
,, तत्र साधनानि
३४ जीवस्य कीदृशं ज्ञानमिति प्रश्नोत्तरम्
३५ जीवेश्वरभावः मायानिबंधनः
,, जीवत्वे दृष्टांतः
,, न स्वतंत्रो जीवो नाम कश्चित्
३६ परात्मनः सर्वात्मत्वसाधनम्
,, सर्वस्य ज्ञानस्य स्वप्रकाशत्वमेकत्वं च
,, ज्ञानस्य स्वप्रकाशत्वानङ्गीकारे बाधकम्
३७ क्रियायाः स्वरूपम्
,, क्रियायाः सत्त्वं तत्कार्यं च
,, सर्वज्ञत्वं किंचिज्ज्ञत्वं चैकत्रास्ति
३८ जीवेषु तारतम्ये हेतुः
,, ईश्वरत्वादेः मायामयत्वोपसंहारः
,, तत्र प्रमाणम्
,, गुरुमूर्तिदक्षिणामूर्तिपदयोर्व्याख्यानम्
३९ प्रथमश्लोकव्याख्यादिसमाप्तिः

---

,, जगतःपरमाणूपादानकत्ववादिवैशेषिकस्य मतम्
४० नेश्वरः कार्यहेतुः
,, ईश्वरस्य कर्तृत्वमंतरा नान्यथा कारणत्वमिति प्रतिपादनाय समवाय्यादिकारणत्रयनिरूपणम्
४१ ईश्वरस्य कार्योत्पत्तिनिमित्तत्वसाधनम्
,, ईश्वरस्य जगदुपादानत्वसाधनम्
४२ प्रधानकारणवादिसांख्यमतम्
,, सत्त्वरजस्तमोगुणानां लक्षणं तत्कार्याणि च
४३ द्वितीयो मूलश्लोकस्तद्व्याख्या च
४५ परमाणुकारणवादिवैशेषिकमतखण्डनम्
४७ प्रकाशसन्मात्रस्याकाशवदमूर्तस्य जगत्कार्यकारणत्वम्
,, सर्वाः कल्पनाः सन्मात्रस्फुरणविवर्ताः इति आरम्भपरिणामवादयोः खण्डनम्
४८ ज्ञानक्रियाशक्त्योरुपाधिना चेतनाश्रयत्वम्
४९ चेतनमन्तरा कार्यमुत्पद्यते इति सांख्यशंकानिराकरणम्
,, ज्ञानं द्विधा—सामान्यविशेषभेदात्
,, तत्र विशेषज्ञानमनेकधेति साधनम्

५० चार्वाककाणादबौद्धसांख्यन्यायैकदेशि–गौतम–प्राभाकर-भाट्ट-वेदांति–पौराणिकमतानि
५१ काणादस्य षट्पदार्थवादिनः मतम्
,, नव द्रव्याणि चतुर्विंशति गुणाश्च
५२ संस्कारभेदाः त्रयः
५३ कर्माणि पञ्च
,, सामान्यं द्विधा
,, विशेषाः
,, समवायसम्बन्धः
,, नवद्रव्येषु नित्यत्वानित्यत्वादिभेदनिरूपणम्
५४ वैशेषिकमतोपसंहारः
,, सांख्यमतनिरूपणम्
,, तत्र सृष्टिक्रमः
,, साहंकारिकाणां खादीनां स्वरूपम्
५५ भूतसूक्ष्माणामधिष्ठातृदेवताः
,, सात्त्विकाहंकारकार्यम्
,, तेषां विषयाः
,, अंतःकरणाधिष्ठातृदेवताः
,, ज्ञानेंद्रियाणि तदधिष्ठातृदेवताश्च
५६ राजसाहंकारकार्यम्
,, सविषयकर्मेंद्रियविभागः
,, तदधिष्ठातृदेवताः
,, सांख्यमतोपसंहारः
,, तत्र पंचविंशतितत्त्वोपन्यासः
५७ पौराणिकमतम्
,, त्रिंशत्तत्त्वानि
,, शैवमतम्
,, षट्त्रिंशत्तत्त्वानि
५८ वेदांतिमतम्–ईश्वरे च जगत् मायया सृष्टेः प्राक् स्थितमपीश्वरान्न पृथगिति जगतो मायामयत्वम्
५९ जगदीश्वरयोः कार्यकारणत्वे व्यक्त्यानंत्यं नेति खण्डनम्
,, तत्र विश्वामित्रादियोगिदृष्टांतः
६० ईश्वरस्य निर्व्यापारस्य सृष्टिस्थितिसंहारकारणत्वं कथमिति शंकायाः समाधानम्
,, तन्निष्ठं ज्ञातृत्वं व्यापारानपेक्षम्
,, स्वातंत्र्यकेवलेच्छाशक्त्याः ईश्वरस्य परानपेक्षाः
,, स्वातंत्र्यमीश्वरस्यान्यादृशम्
,, तदिच्छापूर्वक एव जगत्सृष्ट्यादिः
६१ ईश्वरस्य निमित्तत्वे कर्तृत्वेन विकारित्वादिदोषः
,, नित्यज्ञानेच्छावानीश्वरः ततः विलक्षणशरीरः जीव इति नोक्तदोष इति चेत्सर्वदा जगत्सृष्ट्यापत्तिरिति शंकासमाधानम्
६२ सर्वदा प्रवृत्तौ संसारनाशस्तस्य न स्यादित्यादिकम्
,, स्वमतं परमतनिराकरण एव निर्दुष्टमिति द्वितीयमूलश्लोकव्याख्याद्युपसंहारः

६३ तत्त्वम्पदार्थयोर्वाक्यार्थप्रकाशनाय प्रश्नाः
तृतीयश्लोकस्तव्द्याख्या च
६४ भावेष्वात्मस्फुरणे कुत आगत्य संगते
,, भावेषु तत्संक्रमः कथम्

६४ प्रतिविम्वभावेन सङ्गते इत्यस्योत्तरम्
६५ भावानां मिथ्यात्वस्फुटीकरणम्
,, संक्रमणेन संगते इति द्वितीयप्रश्नोत्तरम्
,, सच्चिदानन्दसत्तास्फूर्तिकत्वं भावानाम्
६६ विषयस्फूर्तिरात्मधर्म एव न विषयधर्मः
६७ सहजाज्ञानवशाल्लोकानांप्रत्यक्षाऽद्वितीयानन्दाप्रतीतिः
,, जीवेश्वरयोर्भेदेनभानेऽधिकं निमित्तम्
६८ तन्निवारणाय तत्त्वमस्यादिवाक्यार्थोपदेशः
,, तत्त्वम्पदयोर्वाच्यार्थलक्ष्यार्थाः
६९ तत्रादौ वाच्यार्थः
,, ततो लक्ष्यार्थः
७० तत्र संबंधत्रयम्
,, ततोखंडार्थस्तयोः
,, लक्षणा त्रिविधा
७१ अत्र जहदजहल्लक्षणैव
,, सामानाधिकरण्यलक्षणम्
७२ तत्त्वम्पदयोः सामानाधिकरण्यं संसृष्टार्थपरत्वेन न
,, एतदर्थं नवधा संवन्धानां खण्डनम्
,, आत्मनो निरंशत्वं निर्विकारत्वमिति चूर्णवद्वीजवद्वा नानुप्रवेशः
७३ तत्त्वम्पदार्थयोः स्तोतृस्तुत्यभावसंवन्धो न
७४ तत्त्वम्पदार्थयोः सादृश्ययोगसंवन्धो न
,, तयोः कार्यकारणभावरूपसंवन्धो न
,, तयोः जातिव्यक्तिभावरूपसंवन्धो न
७५ गुणगुणित्वलक्षणसंवन्धो न
,, उपासनाकर्मत्वसंबन्धो न
,, अन्यतरभावकल्पनाविषयत्वसंवन्धो न
७६ त्वम्पदार्थशोधनप्रकारः
,, अंतरात्मनः सूक्ष्मस्य च पञ्चकोशादुद्धरणप्रकारः
७७ प्रतिशरीरं भेद उपाधिना
७८ जीवेश्वरयोस्तटस्थस्वरूपलक्षणाभ्यामैक्ययोग्यता
७९ तटस्थलक्षणम्
,, स्वरूपलक्षणम्
८० एकप्रकाशत्वं सर्वात्मत्वं च परिदृश्यम्
,, विद्यमानदेवमनुष्यादिभेदो न सत्यः
,, जीवोपि सर्वात्मा
,, तत्त्वमस्यादिवाक्यर्थज्ञानफलम्
,, जीवब्रह्मणोरेकत्वज्ञानफलम्
८१ तदभ्यासदृढीकरणे समूलं संसारनाशः
,, अनेनोल्लासेन सर्ववेदान्तानां समन्वय ऐक्यं च दर्शितम्
,, तृतीयश्लोकव्याख्यादिसमाप्तिः

८१ श्लोकत्रयेणोक्ततत्त्वम्पदार्थसमन्वयदृढीकरणायारब्धश्लोकत्रयमध्ये चतुर्थश्लोकोपोद्घातः–
,, अद्वैततत्त्वे सर्वभावानां स्वतस्सत्तास्फुरणे नेत्यस्य खण्डनं चतुर्थश्लोकेन
८२ चतुर्थश्लोकस्तद्व्याख्या च
८३ ईश्वरस्यैव स्वप्रकाशत्वसाधनम्
,, विषयाणां सत्त्वमपि प्रकाशवत्पराधीनम्
८४ तस्यैव स्फुटीकरणम्
८५ विषयाः स्वप्रकाशका न
,, ईश्वरस्य कर्तृत्वं ज्ञातृत्वं च निर्विकारत्वेन
८६ आत्मनो ज्ञातृत्वोपाधिर्ज्ञानशक्तिरन्तःकरणम्
८७ जीवभावमापन्नस्योपाधिद्वारावस्थात्रययोगानुभवनिरूपणम्
८८ नाडीस्वरूपं तत्संख्या तत्परिमाणानि
,, मूलाधारलक्षणं तदुपस्कराश्च
८९ कुण्डलिनीमूलभूतमूलाधारात्सुषुम्नानाडीनिर्गमः
,, सुषुम्नालक्षणम्
,, इडापिङ्गलयोर्लक्षणम्
,, नाडीचक्रम्
९० अथोर्ध्वमुखा नाड्यः—
,, स्वाधिष्ठानाद्गान्धारीहस्तिजिह्वे निर्गत्य नासिकान्तं गते
,, मणिपूरकचक्रस्वरूपम्
,, मणिपूरकात्पूषालम्बुसे निर्गत्य कर्णद्वयान्तं गते
,, मणिपूरकाच्छुक्ला नाडी निर्गत्य भ्रूमध्यान्तं गता
९१ मणिपूरकात्सरस्वती॰ जिह्वान्तं॰
,, मणिपूरकाद्विश्वोदरी॰ चतुर्विधमन्नमत्ति उदरस्था
,, पयस्विनी कण्ठे स्थिता क्षुतं कुरुते
,, अथाधोमुखा नाड्यः—
,, राकासिनीवालीकुहूनाड्यः तत्कृत्यानि
,, पुनरूर्ध्वनाडी—
,, शङ्खिनी मूर्ध्नि कमलेऽमृतं स्रवति नाडीचक्रान्निर्गता
,, बहुनाडीनां मध्ये सुषुम्नैव ब्रह्मरन्ध्रं गता
९२ जाग्रदवस्थालक्षणम्
९३ स्वप्नावस्थालक्षणम्
,, सुषुप्त्यवस्थालक्षणम्
,, आत्मा मायासमाच्छन्नः
९४ सर्वदा स्वप्रकाशचिदानन्द एवात्मेत्यत्र लिङ्गम्
,, सुखलक्षणम्
९५ सत्तास्फूर्ती ईश्वरस्यैव
,, ईश्वरस्य लक्षणं तटस्थम्
९६ जगतोऽसत्यत्वं जडत्वं च
,, प्रत्यगात्मत्वमीश्वरस्य
,, अहङ्कारस्त्रिधा––
९७ तत्त्वम्पदार्थभानसाधनशुद्धाहंकारोदाहरणम्
,, सर्वप्राणिसाधारणं तृतीयाहंकारनिरूपणम्
,, अहंकारत्रैविध्योक्तिफलम्

९७ अन्यस्यान्यात्मन्यभिव्यक्तिमार्यया
,, मायानिवृत्तौ यत्नः कार्यः
चतुर्थश्लोकव्याख्यादिसमाप्तिः

---

९८ खण्डनाय मतान्तराणि निरूप्यन्ते—
,, चार्वाकमतम्
१०० प्राणात्मवादिमतम्
,, इन्द्रियात्मवादिमतम्
१०१ बौद्धस्य क्षणिकविज्ञानवादिनो मतम्
,, शून्यवादिनो मतम्
१०२ तेषां खण्डनाय मूलश्लोकस्तद्व्याख्या च
,, चार्वाकमतखण्डनम्
१०४ प्रत्यक्षातिरिक्तमनुमानमभ्युपेयम्
१०५ इन्द्रियात्मवादिमतखण्डनम्
१०६ प्राणात्मवादिमतखण्डनम्
१०७ क्षणिकविज्ञानात्मवादिबौद्धमतखण्डनम्
१०८ देहबुद्ध्यादिसंघातात्मवादिमतखण्डनम्
,, जैनस्य वेदांतिनः एकदेशिनः सांख्यादेश्च मते देहविलक्षणस्य आत्मत्वे परिमाणं किमिति शङ्कानिराकरणम्
१०९ देहपरिमाणात्मवादे दोषः
११० अल्पपरिमाणेऽपि प्रतीयमान आत्मा व्यापक एव
,, पञ्चमश्लोकव्याख्यादिसमाप्तिः

---

११२ शून्यवादिकृतं बौद्धवादखण्डनम्
,, विज्ञानवादिनो मतम्
,, पञ्चस्कन्धसमुदायवादिबौद्धमतम्
,, बाह्यस्कन्धसमुदायः
,, अध्यात्मस्कन्धपञ्चकसमुदायः
,, स्कन्धाः—
११३ रूपस्कन्धः
,, विज्ञानस्कन्धः
,, संज्ञास्कन्धः
,, संस्कारस्कन्धः
,, वेदनास्कन्धः
११४ मोक्षपदार्थः
,, पञ्चस्कन्धातिरिक्त आत्मा नास्ति
,, उभयविधसंघाते स्वगतातिशयः
११५ तदेतद्बौद्धमतखण्डनाय षष्ठश्लोकः
११६ तद्व्याख्यानम्
,, शून्यवादखण्डनम्
११८ पंचस्कन्धसमुदायात्मवादखण्डनम्
,, क्षणिकात्मवादिबौद्धमतखण्डनम्
१२० आत्मनो विषयत्वनिराकरणम्
१२१ राहुग्रस्तेतिमूलश्लोकाक्षरार्थस्यार्थतो वर्णनम्
,, सर्वावभासक आत्मा ईश्वरः
,, मायास्वरूपम्
१२२ प्रबोधसमये प्रत्यभिज्ञायमानात्मस्वरूपम्
,, आत्मा सदैकरूप इंद्रियागोचरश्च
,, आत्मनः सावयवत्वपरिच्छेदविकारित्वाभावाः
१२३ प्रपंचधर्मविलक्षण आत्मा
,, जगदन्तःपातित्वमात्मनो न

१२३ षष्ठश्लोकव्याख्यादिसमाप्तिः

---

१२४ प्रत्यभिज्ञाप्रमाणम्
,, प्रत्यभिज्ञा केत्याक्षेपः
१२५ सप्तमश्लोकस्तद्याख्यानं च
१२६ का वा प्रत्यभिज्ञेति प्रश्न उत आक्षेप इति विकल्पः
१२७ आत्मनः स्थायित्वम्
,, प्रत्यभिज्ञानं प्रत्यक्षं प्रमाणम्
१२८ स्मृत्यप्रामाण्यम्
१२९ स्मृत्यन्यथानुपपत्तिरात्मस्थैर्ये प्रमाणम्
१३० वेदितात्मा नित्यः
१३१ आत्मनः सदाऽप्रमुषितत्वम्
,, ईश्वरस्य द्वे शक्ती बन्धमोक्षापादिके
,, मायाविद्ययोः कार्यम्
१३२ केयं विद्या
,, प्रत्यभिज्ञास्वरूपम्
१३३ विद्यया अविद्यामात्रबाधः
,, मोहापसरणमेव अभिव्यक्तिकारणम्
,, विद्यया आत्मावभासः स्वतः सिद्धः
,, आवरणतिरोधानमेव मानकृत्यम्
१३६ वेदांतवाक्यजनितवृत्तिरूपप्रमाणमोहनिवृत्त्या बन्धनिवृत्तिः
,, देहात्मनोः परस्पराध्यासनिबन्धन एव संसारबन्धः
,, अध्यासे दृष्टान्तः
१३७ शुक्तौ रजतस्य मायामयत्वम् तस्य रजतस्य असत्त्वमपि न
१३८ अन्यथाख्यातिवादिनां मतद्वये प्रथममतखण्डनम्
,, तेषामेव द्वितीयमतखण्डनम्
१३९ आत्मख्यातिपक्षखण्डनम्
,, मायामयत्वस्य दार्ष्टान्तिके उपपादनम्
,, जगतोऽधिष्ठाने भ्रान्तिसिद्धत्वम
१४० निर्णीतविवृत्तवादेन जातविद्यस्य अविद्यामात्रबाधे आत्मावभासः
१४१ तत्र प्रमाणानि
,, सप्तमश्लोकव्याख्यादिसमाप्तिः

---

,, उक्तयावत्स्तोत्रार्थस्योपसंहारायाऽष्टमश्लोकोत्थापनम्
१४२ ब्रह्मणः एकत्वे सर्वात्मत्वे च कथं व्यवहारः
,, बन्धः मोक्षश्च कस्य
,, केन हेतुना बन्धः
,, मायाया लक्षणं किम्
,, एषां प्रश्नानामुत्तरितानामपि पुनस्संक्षेपेणोत्तरम्
१४३ अत्र उक्तार्थे पुनःपुनरुक्तेपि न पौनरुक्त्यदोषोऽभ्यासार्थत्वे
,, अष्टमश्लोकस्तद्याख्या च
,, अविद्यानिवृत्तेःप्राक् सर्वव्यवहारः
,, एकोप्यनेकधा व्यवहारास्पदम्
,, ईश्वरस्यैवानेकधा विभावना
१४५ एकस्मिन्पितृपुत्रादिभावः कल्पित एव न नियतः
,, परमात्मनि भेदप्रतीतिः कल्पितैव
,, मिथ्यात्वलक्षणम्
,, मायालक्षणमपीदमेव

१४५ बाधो नाम

१४६ वेदान्तशास्त्रप्रामाण्यनिरूपणं मिथ्यात्वेपि सर्वस्य

,, सर्वस्य मायामयत्वदृढीकरणम्

,, विवर्तस्वरूपम्

,, मायास्वरूपम्

,, मायायाः साक्षाल्लक्षणम्

१४८ मायापरवशान्प्रति शोचनम्

,, मनसो मोक्षः परमानन्दलाभे कारणम्

,, जाग्रत्स्वप्नसुषुप्त्यवस्थाः

१४९ मनसो भेदभ्रान्तिभिः संसारः नात्मनः

,, आत्मनः कर्मलेशलेपो न

,, आत्मनिष्ठं कर्तृत्वादिकमौपाधिकम्

१५० आत्मा सोपाधिकोप्यसङ्गत्वकूटस्थत्वादिस्वभावः

,, विक्षेपावभासोपि न पारमार्थिकः

,, मायया भ्रामितो जीवः

१५१ ससाधनस्तत्त्वज्ञानद्वारको मोक्षः

,, मायिकभेदबोधिनी श्रुतिः

,, अष्टमश्लोकव्याख्यादिसमाप्तिः

---

१५२ एवंविधमायानिवृत्तिः कथमिति प्रश्नः

,, कल्पितविग्रहस्येश्वरस्य ( षट्त्रिंशत्तत्त्वाधिष्ठानाष्टमूर्तेः ) उपासनालम्बनत्वम्

१५३ अष्टावेव मूर्तयः कुत उपादीयन्ते नान्या इति प्रश्नोत्तरत्वेन नवमश्लोकस्तद्व्याख्या च

१५४ सर्वं जगदष्टमूर्त्यात्मकम्

,, महेश्वरविग्रहः षट्त्रिंशत्तत्त्वात्मकः

,, तच्चाध्यात्माधिदैवभेदेन षट्त्रिंशत्तत्वं द्विविधम्

,, आद्यं चतुर्दशभुवनात्मकं द्वितीयं देहपिंडात्मकम्

,, षट्त्रिंशत्तत्त्वानि पिण्डे ब्रह्माण्डे-

,, पि सर्वत्र, तच्च सर्वमष्टमूर्त्यात्मकम्

१५५ पिण्डे ब्रह्माण्डसंपादने निमित्तम्

,, तथोपासनया पिण्डे ब्रह्माण्डसंपत्तिः फलम्

,, तत्र प्रमाणं तैत्तिरीयश्रुतिः

१५६ ब्रह्माण्डोदरस्थभूरादिसप्तलो-

,, कानां षट्चक्रेषु स्थितिरिति संपत्त्यनुक्रमेणोपासना कार्या

,, संपूर्णपिण्डे भूर्लोकादिसंस्थानविशेषसंपादनप्रकारः– ( शरीरे मेरुकुलपर्वतगङ्गानद्यादिकल्पनाप्रकारेणोपासनार्थः )

१५७ शरीरे प्राणात्मना ब्रह्माण्डवायुः

१५८ प्राणो दशधा तद्दैर्घ्यं च

,, अग्नीषोमरूपोदानकृत्यानि

,, व्यानसमानकृत्यानि

१५९ नागादिपञ्चवायुकृत्यानि

,, प्राणापानौ चन्द्रार्कत्वेन ध्येयौ

,, पुरुषः

१६० देहे भूरम्भआदिलोकोपासनाफलममनस्कत्वम्

,, यमाः ( मनस्साध्याः )

१६१ नियमाः ( कायसाध्याः )

१६१ आसनानि–( ब्राह्मवैष्णवरौद्रयोन्यासनानि )
१६२ निरालम्बनयोगे त्वासनादिविशेषाः
" प्राणायामाः
" प्रत्याहारः
१६३ धारणा
" ध्यानम्
" समाधिद्वयम्
१६४ प्राणायामफलम्
" योगे साधनान्तरम्
" वशीकृतचित्तप्राणस्य योगिनश्चिह्नानि
" पञ्चभूतजयः
१६५ पृथिव्याख्यप्रथमभूमिकाजयपर्यन्तस्य योगस्य लक्षणम्
" जलाख्यद्वितीयभूमिकाजयपर्यन्तस्य योगस्य लक्षणम्
तेजसाख्यतृतीयभूमिकाजयपर्यन्तस्य योगस्य लक्षणम्
१६६ वाय्वाख्यतृतीयभूमिकाजयपर्यन्तस्य योगस्य लक्षणम्
" आकाशाख्यचतुर्थभूमिकाजयपर्यन्तस्य योगस्य लक्षणम्
" वशीकृतमनोयोगचिह्नानि तत्फलं च
१६७ प्रणवाभिव्यक्तिप्रकारः
" प्रत्यहं प्राणिनां श्वाससंख्या
१६७ प्रणवस्वरूपक्रमः
१६८ प्रणवे पञ्चाक्षरी
" एतत्पञ्चाक्षरीदेवताः
१६९ सर्वसिद्धिर्गुरुदेवतानुग्रहात्
" प्रणवार्थः
१७० नवमश्लोकव्याख्यादिसमाप्तिः–


अथ दशमोल्लासः—


" एतत्स्तोत्रफलम्
१७१ इति दक्षिणामूर्तिस्तोत्रसमाप्तिः अस्य मोक्षो मुख्यं फलम्
१७२ ईश्वरत्वं नाम
" स्वस्येश्वरत्वप्राप्तावेव यतितव्यम्
१७३ तत्रानुषङ्गिकाष्टसिद्धिनामानि
१७४ अणिमासिद्धिलक्षणम्
" महिमासिद्धिलक्षणम्
" लघिमासिद्धिलक्षणम्
" गरिमासिद्धिलक्षणम्
१७५ प्राप्तिसिद्धिलक्षणम्
" प्राकाम्यसिद्धिलक्षणम्
" अथवा प्राकाश्यसिद्धिलक्षणम्
" ईश्वरत्वसिद्धिलक्षणम्
१७६ वशित्वसिद्धिलक्षणम्
" एतत्स्तोत्रफले मोक्ष एवेच्छा कार्या
१७७ एतत्स्तोत्रेऽधिकारिणः—
दशमश्लोकव्याख्यादिसमाप्तिः

ॐ

# श्रीदक्षिणामूर्तिस्तोत्रं-

## स्वयम्प्रकाशयतिविरचितलघुतत्त्व-सुधाव्याख्यासमेतम्.

मौनव्याख्याप्रकटितपरब्रह्मतत्त्वं युवानं
वर्षिष्ठान्तेवसदृषिगणैरावृतं ब्रह्मनिष्ठैः ।
आचार्येन्द्रं करकलितचिन्मुद्रमानन्दमूर्तिं
स्वात्मारामं मुदितवदनं दक्षिणामूर्तिमीडे ॥ १ ॥
कैवल्यानन्दयोगीन्द्रशुद्धानन्दयतीश्वरौ ।
नत्वारभे लघुव्याख्यां दक्षिणाशामुखस्तुतेः ॥ २ ॥

इह खलु सर्वज्ञो भगवान्भाष्यकारो लोकानुग्रहैकप्रयोजनकृतशरीरपरिग्रहः सकलवेदान्तदुग्धाब्धेः न्यायमन्दरेण विचारनिर्मन्थनादाविर्भूताद्वैतामृतस्य विन्यासकलशभूतं श्रीदक्षिणामूर्तिस्तोत्रं सकललोकानुजिघृक्षया भोक्तृजीवभोग्यजगद्भोगप्रदपरमेश्वरमोक्षप्रदगुरूणामत्यन्ताभेदबोधकं सकृत्पाठश्रवणार्थमननादिमात्रेण परमपुरुषार्थप्रापकमारभमाणस्तस्य वेदान्तसारभूतनवनीतपिण्डात्मकत्वेन तदीयविषयादिभिरेव तद्वत्तासिद्धिमभिप्रेत्य, आदौ प्रतीचस्सकलजगदधिष्ठानत्वेन परमेश्वरतां दर्शयन् दक्षिणाशामुखं परमेश्वरं मनसा पूजयति-विश्वमिति—

विश्वं दर्पणदृश्यमाननगरीतुल्यं निजान्तर्गतं

**पश्यन्नात्मनि मायया बहिरिवोद्भूतं यथा निद्रया।**
**यस्साक्षात्कुरुते प्रबोधसमये स्वात्मानमेवाद्वयं**
**तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये॥१॥**

'विश्वं' विविधप्रत्ययगम्यं वियदादि सर्वमिदं जगत्, 'निजान्तर्गतं' निजं स्वीयम् अन्तः मध्यं गतं प्राप्तं, प्रत्यक्स्वरूपे स्थितमिति यावत्। निर्विकारे नीरन्ध्रेऽतिस्वच्छेऽसङ्गे सूक्ष्मे प्रतीचि जगतस्तद्विपरीतस्य स्थितौ तत्सदृशं दृष्टान्तमाह—'दर्पणदृश्यमाननगरीतुल्यम्' इति। दर्पणे आदर्शे नीरन्ध्रे असङ्गे स्वच्छे सूक्ष्मे निर्विकारे प्रतिबिम्बिता सती दृश्यमाना अवलोक्यमाना या नगरी पुरी चतुर्दशसन्निवेशा सप्तवापीयुक्ता नानोपवनदक्षिणोत्तरतोतिमनोहरमार्गद्वयविभूषिता मङ्गलदीपिकाद्वयविराजिता अनेकक्रीडाशिखरियुता नानाविधजनसङ्कुला क्वचिद्धट्टमार्गप्रदेशयुता च, तत्तुल्यं तत्समानम्। तदुक्तं भारतीतीर्थैः—

निश्छिद्रदर्पणे भाति वस्तुगर्भं बृहज्जगत्।
सच्चित्सुखे तथा नानाजगद्गर्भमिदं वियत्[2] ॥ इति।

वासिष्ठेऽपि शिलोपाख्याने इदमुक्तं[3]—

द्यौः क्ष्मा वायुरथाकाशः पर्वतास्सरितो दिशः।
सन्ति तस्यां शिला सा च सुषिरा न मनागपि॥
अप्यत्यन्तघनाङ्गायास्सुनीरन्ध्राकृतेरपि।
विद्यतेन्तर्जगद्वृन्दं व्योम्नीव विततोनिलः॥ इति।

ननु प्रतीचोन्तरे यदि सदा विश्वं तिष्ठति तर्हि रागादिवदन्तरेवानुभूयेतेत्याशङ्क्याह—आत्मनीत्यादिना। 'आ-

---

१ 'चित्कष्ट' 'चिदष्ट' इति पाठान्तरे. २ पञ्चदश्यां १३-९९.
३ निर्वाणप्रकरणे ४६ अध्याये.

त्मनि' स्वप्रकाशे प्रतीचि विषये आश्रये च माया अविद्या सूर्ये पेचकादीनामन्धकारप्रतीतिवन्मामहं न जानामीति भ्रमानुभवसिद्धा तया 'मायया' 'बहिः' स्वस्माद्बाह्यदेशे 'उद्भूतमिव' आविर्भूतमिव 'पश्यन्' अवलोकयन्,' 'यः' इत्युत्तरत्र सम्बन्धः। अन्तर्विद्यमानस्य जगतो बाह्यत्वेनानुभवे दृष्टान्तमाह—यथानिद्रयेति ॥ 'यथा निद्रया' स्वाप्नं जगत् साक्षिणि स्वस्मिन्नध्यस्ततया स्थितमपि स्वस्माद्बहिस्स्थितमिवानुभवति तद्वदेवेदं जाग्रत्प्रपञ्चमपि स्वस्मिन् प्रत्यक्चैतन्ये अध्यस्ततया स्थितमेव स्वाध्यस्तदेहादितादात्म्याध्यासवशात् स्वस्माद्बहिरिव पश्यति । अन्यथा जडस्य जगतः प्रत्यक्चैतन्येन सह संयोगाद्यन्यतमसम्बन्धासम्भवेन प्रतीचस्सकाशाज्जगद्भानं न स्यात् । तस्मात्तत्राध्यस्तमेव तत् । तथा च प्रत्यगात्मानं प्रकृत्य श्रुतिर्भवति—

पुरत्रये क्रीडति यश्च जीवस्ततस्तु जातं सकलं विचित्रम् ।
आधारमानन्दमखण्डबोधं यस्मिन् लयं याति पुरत्रयं च ॥
एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि च ।
खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी ॥
मय्येव सकलं जातं मयि सर्वं प्रतिष्ठितम् ।
मयि सर्वं लयं याति तद्ब्रह्माद्वयमस्म्यहम् ॥ इति ।
यथा स्वप्नप्रपञ्चोयं मयि मायाविजृम्भितः ।
एवं जाग्रत्प्रपञ्चश्च मयि मायाविजृम्भितः ॥ इति पुराणवचनं च । ततः प्रतीच्येव जाग्रत्प्रपञ्चोध्यस्तोनुभूयते भ्रान्त्या बहिरिवेति भावः ।

---

१ कैवल्योपनिषदि.

ननु स्वात्मनि प्रपञ्चोध्यस्तश्चेद्बाध्येत। न च कदाचिदपि बाधोनुभूयते। अतो नात्मन्यध्यस्तः, किन्तु बहिः परमार्थत एव स विद्यत इत्याशङ्क्य यथा स्वप्नप्रपञ्चोध्यस्तोपि तदा सत्य इव भाति, प्रबोधसमये बाध्यते, तथैवायमपि जाग्रत्प्रपञ्चः तत्त्वज्ञानात्पूर्वं सत्यत्वेन भातोप्याचार्येण परमदयालुना साक्षात्परमेश्वरावताररूपेणोपदिष्टतत्त्वमस्यादिमहावाक्यजन्यप्रत्यग्ब्रह्मैक्यसाक्षात्कारसमये समूलं बाधितस्सन् प्रत्यगभिन्नाद्वितीयब्रह्ममात्रतया परिशिष्यत इत्यभिप्रेत्याह—यस्साक्षादित्यादिना। 'यः' अध्यस्तप्रपञ्चाधिष्ठानभूतः प्रत्यगात्मा, 'प्रबोधसमये' गुरूपदिष्टमहावाक्यात् ज्ञानोत्पत्तिकाले, 'अद्वयं' सर्वप्रपञ्चस्य समूलस्य बाधितत्वेन वियदादिद्वयरहितं, 'स्वात्मानमेव' वियदाद्यधिष्ठानभूतब्रह्माभिन्नं सच्चिदानन्दात्मकं प्रत्यञ्चमेव, 'साक्षात्कुरुते' सच्चिदानन्दात्मकं ब्रह्माहमस्मीत्यप्रतिबन्धेनाव्यवधानमनुभवति; 'यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्' इत्यादिश्रुतेः[1]। 'तस्मै' उक्तरूपाय, 'श्रीगुरुमूर्तये' श्रीगुरुः साक्षात्कृतब्रह्मतत्त्वतया त्रिविधपरिच्छेदशून्यो ज्ञानोपदेष्टा पुरुषः, तन्मूर्तये तद्रूपेणावस्थिताय, 'श्रीदक्षिणामूर्तये' दक्षिणा दक्षिणदिगभिमुखा मूर्तिर्विग्रहो यस्य तस्मै।

परमाद्वैतविज्ञानं कृपया वै ददाति यः।
सोयं गुरुर्गुरुस्साक्षाच्छिव एव न संशयः॥

इत्यादिवचनशतेभ्यो ज्ञानोपदेष्टा गुरुस्साक्षात्परमेश्वर एव। अथवा—श्रीमती सच्चिदानन्दात्मिका गुर्वी अतिमहत्तरा मूर्तिस्स्वरूपं यस्य स तथा, तस्मै श्रीगुरुमूर्तये। श्रिया अनाद्यचिन्त्यमायाशक्त्या दक्षिणः सृष्टिस्थित्यन्तविरचनानिपु-

१ बृ. उ. ६-५-१५.

णश्चासौ परमार्थतोऽमूर्तिश्च आकारविशेषरहितः, 'अस्थूलमनणु' इत्यादि श्रुतेः । स दक्षिणामूर्तिः तस्मै 'इदं' 'नमः' प्रह्वीभावोस्त्विति शेषः । प्रह्वीभावश्च स्वात्मनः परमेश्वरे एकत्वेन समर्पणम् । अत्र च पूर्वार्धेन त्वम्पदार्थ उक्तः, उत्तरार्धे श्रीगुरुमूर्तये श्रीदक्षिणामूर्तय इति पदद्वयेन मूर्तिद्वययुक्तस्तत्पदार्थ उक्तः । स्वात्मानमद्वयमिति पदद्वयसामानाधिकरण्येन यत्तच्छब्दाभ्यां च प्रत्यग्ब्रह्मैक्यलक्षणो वाक्यार्थ उक्तः । सकलवेदान्तप्रसिद्धोयमेवार्थः उत्तरश्लोकैः प्रपञ्च्यते ॥

दर्पणदृश्यमाननगरीतुल्यं निजान्तर्गतं विश्वं यथा निद्रया तथात्मनि मायया बहिरुद्भूतमिव पश्यन् यः प्रबोधसमयेऽद्वयं स्वात्मानमेव साक्षात्कुरुते तस्मै इदं नम इत्यन्वयः ॥ एवमेवास्यार्थो वार्तिककारेण सङ्गृह्योक्तः—

ईश्वरो गुरुरात्मेति मूर्तिभेदाद्विभागिने ।
व्योमवद्व्याप्तदेहाय दक्षिणामूर्तये नमः ॥ इति ॥ १ ॥

---

नन्वात्मनि प्रपञ्चस्यावस्थानं नोपपद्यते, तदकारणत्वात् । तथाहि—किमात्मा जगदारम्भकः उत तदाकारपरिणामी ? नाद्यः; एकस्य विभोश्चिद्रूपस्य जडप्रपञ्चारम्भकत्वासम्भवात् । नापि द्वितीयः; निरवयवनिर्विकारचिद्रूपस्य परिणामासम्भवात् । ततो नित्याश्चतुर्विधाः परमाणवो जगदारम्भका इति तेष्वेव तस्य स्थितिः । यद्वा—प्रधानमेव जडं त्रिगुणात्मकं जगदाकारपरिणामि, तत्रैवेदं जगत्परमार्थतोस्ति न तु चिदात्मनि इति नैयायिकानां साङ्ख्यानां वा मतमाशङ्क्य—न

१ बृ. उ. ५-८-८

तावत्परमाण्वारम्भवाद उपपद्यते, निरवयवानां तेषां सर्वात्मना संयोगे प्रथिमानुपपत्तेः, भिन्नयोर्गवाश्ववत्कार्यकारणभावायोगात्, पूर्वमसतश्च कार्यस्य शशविषाणवदुत्पत्त्यनुपपत्तेः, अत्यन्तभिन्नकार्यारम्भे कार्ये गुरुत्वादितद्वैगुण्यापत्तेः, परमाणुसद्भावे प्रमाणाभावात्, कार्यद्रव्यस्य स्वन्यूनपरिमाणारब्धत्वनियमस्य स्थूलतूलपिण्डारब्धतन्त्वादावदर्शनाच्च। नापि प्रधानपरिणामवादः; तस्य चेतनानधिष्ठितस्य कार्योत्पादे स्वतोऽसामर्थ्यात्, लोके रथादेश्चेतनाधिष्ठितस्यैव प्रवृत्तिदर्शनात्, तत्सद्भावे प्रमाणाभावात्, 'अजाम्[1]' इत्यादिश्रुतेश्च तेजोबन्नादिप्रकृत्यव्याकृतपरत्वाच्च। किं तु श्रुतौ 'सत्यं ज्ञानमनन्तं ब्रह्म[2]' 'तस्माद्वा एतस्मादात्मन आकाशस्सम्भूतः[2]' 'सदेव सोम्येदमग्र आसीत्[3]' 'तदैक्षत बहुस्यां प्रजायेयेति[3]' 'यतो वा इमानि भूतानि जायन्ते[4]' 'यस्सर्वज्ञस्सर्ववित् यस्य ज्ञानमयं तपः। तस्मादेतद्ब्रह्म नाम रूपमन्नं च जायते[5]' इत्यादिषु सहस्रशः परमात्मन एव चेतनाज्जगदुत्पत्तिश्रवणात्, विलक्षणयोरपि कार्यकारणभावस्य गोमयवृश्चिकपुरुषकेशलोमादौ दर्शनात्, आरम्भपरिणामव्यतिरेकेणातत्त्वतोन्यथाभानलक्षणविवर्तरूपप्रकारस्यापि कार्योत्पादे स्वप्नप्रपञ्चशुक्तिरजतादौ दर्शनात्,* अत्र विवर्तवादस्य विवक्षितत्वात्, † 'सर्वं तं परादाद्योन्यत्रात्मनस्सर्वं वेद[6]' इत्यादिश्रुतौ आत्म-

१ श्वे. उ. ४-५. २ तै. उ. २-१. ३ छा. उ. ६-२.
४ तै. उ. ३-१. ५ मु. १-१-९.

* 'उपादानसमसत्ताककार्यापत्तिः परिणामः, उपादानविषमसत्ताककार्यापत्तिर्विवर्त इति' इति ख. ग. कोशयोरधिकः पाठः † अयं हेतुः क. कोशे नास्ति ६ बृ. उ. ४-४-६

अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः
अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः

नोऽन्यत्र जगद्भेदनस्य निन्दितत्वात्, घटोस्ति पटोस्ति घटस्स्फुरति पटस्स्फुरतीति सत्तास्फुरणानुविद्धतयाऽनुभूयमानस्य जगतो मृदनुविद्धघटस्य मृत्कार्यत्ववत् सत्तास्फुरणात्मकार्यत्वस्यैव युक्तत्वाच्चात्मैव जगदुत्पत्त्यादिकारणमित्यभिप्रेत्याह—बीजस्यान्तरिवेति ॥

बीजस्यान्तरिवाङ्कुरो जगदिदं प्राङ्निर्विकल्पं पुनर्मायाकल्पितदेशकालकलनावैचित्र्यचित्रीकृतम् । मायावीव विजृम्भयत्यपि महायोगीव यस्स्वेच्छया तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥ २ ॥

'इदम्' अनुभूयमानं सर्वं 'जगत्' 'प्राक्' उत्पत्तेः पूर्वं 'निर्विकल्पं' भोक्तृभोग्यादिविकल्परहितमात्ममात्रमेवासीत्; 'आत्मा वा इदमेक एवाग्र आसीत्'[1] 'सदेव सोम्येदमग्र आसीत्'[2] इत्यादिश्रुतेः । तत्र दृष्टान्तमाह—बीजस्येति । 'बीजस्यान्तः' मध्ये 'अङ्कुर इव' । उपलक्षणमेतत्—पल्लवपत्रपुष्पफलशाखाविटपात्मकवृक्षो यथा उत्पत्तेः पूर्वं निर्विकल्पं बीजमात्रमासीत्तद्वत् । 'पुनः' पश्चात् सृष्टिसमये, 'मायाकल्पितदेशकालकलनावैचित्र्यचित्रीकृतं' मायया ईश्वराधिष्ठितया कल्पितौ यौ देशकालौ तयोश्च कलना सम्बन्धस्तद्वैचित्र्येण चित्रीकृतं नानाविधभेदभिन्नतया विभक्तम्; 'तं नामरूपाभ्यामेव व्याक्रियते'[3] इति श्रुतेः । ननु कथमीश्वरस्य बाह्यसाधनरहितस्य जगदुत्पादकत्वम्? लोके कुलालादेर्बा-

---

१ ऐ. उ. १-१-१. २ छा. उ. ६-२. ३ बृ. उ. ३. ४-७.

ह्यसाधनवत एव कार्यंकरत्वदर्शनादित्याशङ्क्य, ईश्वरस्याना-द्यनिर्वचनीयमायाशक्त्युपहितस्य स्वेच्छामात्रेणैवेन्द्रजालि-कवद्देवर्षिपित्रादियोगिवच्चोपपद्यते जगदुत्पादकत्वमित्यभि-प्रेत्याह-मायावीवेत्यादिना । 'यः'परमेश्वरो'मायावीव'लो-कप्रसिद्धैन्द्रजालिकमायाविवत् 'महायोगीव' विश्वामित्रादि-महायोगिवच्च'स्वेच्छया' स्वसङ्कल्पमात्रेण, 'विजृम्भयति' इदं जगदुत्पादयति, 'इन्द्रो मायाभिः पुरुरूप ईयते'[१] 'तदात्मा-नꣳस्वयमकुरुत'[२] 'सच्च त्यच्चाभवत्'[३], इति श्रुतेः । नापि मायया तस्य सद्वितीयत्वम्, तस्या अपि कल्पितत्वात् । नापि तस्य कारणत्वेन विकारित्वम्, जगत्कारणत्वस्यानाद्य-निर्वचनीयमायाघटिततया कल्पितत्वेनोपलक्षणत्वेनापि* तत्र विकारानापादकत्वात्† ततश्च तत्र कस्यापि दोषस्याभावात् ब्रह्मैव प्रत्यगभिन्नं सकलजगदुत्पत्तिस्थितिलयहेतुरिति भावः। तस्मै........नमः ॥ २ ॥

---

नन्वसदेव जगतः कारणं, पिण्डादिनाशादेव घटाद्युत्पत्तिदर्श-नात्, जागराद्यकालीनकार्यस्य चासत्पूर्वकत्वदर्शनात्, तद्दृ-ष्टान्तेन जगतोपि तथात्वानुमानात्, 'असद्वा इदमग्र आसीत्'[४] इति श्रुतेश्चेत्यसद्वादमाशङ्क्याह—यस्यैवेति ॥

यस्यैव स्फुरणं सदात्मकमसत्कल्पार्थगं भास-

---

* ग—उपलक्षणस्य.

† 'यावत्कार्यमवस्थायिभेदहेतोरुपाधिता । कादाचित्कतया भेदधीहेतुरुपल-क्षणम् ॥, इति क. ग. कोशयोरधिकः पाठः ॥

१ बृ. उ. ४-५-१९. २ तै. उ. २-७. ३ तै. उ. २-६. ४ तै. उ. २-७.

ते साक्षात्तत्त्वमसीति वेदवचसा यो बोधयत्याश्रितान् । यत्साक्षात्करणाद्भवेन्न पुनरावृत्तिर्भवाम्भोनिधौ तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥ ३ ॥

'यस्य' प्रत्यगभिन्नस्य परमेश्वरस्य स्वरूपभूतं 'सदात्मकं' सद्रूपं 'स्फुरणमेव' चैतन्यमेव 'असत्कल्पार्थगम्' असत्कल्पाः असत्तुल्याः स्वतस्सत्तारहिताः अनिर्वचनीयाः ये अर्थाः वियदाद्याः तान् गच्छतीत्यसत्कल्पार्थगम्, अनिर्वचनीयवियदादिपदार्थनिष्ठमिति यावत्, 'भासते' प्रकाशते । अयं भावः—जगतोऽसत्कारणत्वे घटोऽसन् पटोऽसन् इत्यसत एव सर्वत्रानुवृत्तिस्स्यात्, न तु सतः । किञ्च—तस्यासतोऽस्वप्रकाशत्वेन तत्र वर्तमानजगतः आन्ध्यमपि स्यात् । जगच्च सदनुविद्धं प्रकाशते । तथा च स्वतस्सत्त्वप्रकाशरहितं जगत् तदधिष्ठानभूतात्मसत्ताप्रकाशाभ्यामेव सत्ताप्रकाशवद्भवतीति तत्राध्यस्तत्वेन तत्कारणकमेव जगत् । नापि पिण्डादिनाशस्य घटादिकारणत्वम्, अनुगतमृदादेरेव कारणत्वात् । जागराद्यकालीनस्य कार्यस्य चासत्पूर्वकत्वं नास्मत्सम्मतम्; सुषुप्तिकालीनसद्रूपात्मनः कारणत्वाङ्गीकारात्, सुषुप्तावात्मसत्त्वस्य च साधयिष्यमाणत्वात् । 'असद्वा इदमग्र आसीत्[1]' इति श्रुतिश्चानभिव्यक्तसत्कारणपरा, 'कथमसतस्सज्जायेत[2]' इति श्रुत्यैवासद्वादस्य प्रतिषेधादिति । अथवा—ननु घटस्सन् पटस्सन् इत्येवं सत्त्वेन प्रतीयमानस्य जगतः कथमसत्कल्पत्वमध्यस्तत्वेनोच्यते? इत्याशङ्क्याह—यस्यैवेत्यादिना ।

---

१ छा. उ. ६ २. २ छा. उ. ६. २. २.

सत्प्रकाशरूपाधिष्ठानात्मसत्तैवाऽरोपितजगन्निष्ठतया प्रतीयते, न तु तस्य स्वतस्सत्त्वम्; 'अथात आदेशो नेति नेति'[1] 'नेह नानास्ति किं चन'[2] इत्यादिश्रुत्या प्रपञ्चस्य प्रतिषेधात्, भ्रान्त्यापि तत्प्रतीत्युपपत्तेश्च। तस्यासद्विलक्षणत्वाङ्गीकारान्न शशविषाणसमत्वम्। ततोऽपरोक्षप्रतीतिरप्युपपद्यत इति तात्पर्यार्थः। अक्षरार्थस्तु पूर्ववत्। येयमसत्ये प्रपञ्चे सत्यत्वबुद्धिरनात्मनि देहादौ चात्मत्वबुद्धिरियमेव सकलसंसारनिदानम्। अस्याश्च निवृत्तिर्गुरूपदिष्टतत्त्वमस्यादिमहावाक्यजन्यापरोक्षज्ञानेन मूलाज्ञाननिवृत्त्यैवेत्यभिप्रायेणाह–साक्षादित्यादिना। 'यो' गुरुरूपः परमेश्वरः 'आश्रितान्' विधिवदुपसन्नान् 'तत्त्वमसीति वेदवचसा' यज्जगत्कारणं सदद्वितीयं ब्रह्म तत्त्वमसि न ततो भिन्नोसीति वेदवचसा वेदवाक्येन 'साक्षात्' अपरोक्षत्वेन तत्त्वं बोधयति ज्ञापयतीत्यर्थः।ननु कथं किञ्चिज्ज्ञत्वसर्वज्ञत्वादिविरुद्धधर्मकयोर्जीवेश्वरयोरभेदमयोग्यं वेदो बोधयति? इति चेदुच्यते–सोयं देवदत्त इत्यादिवाक्यं तदेतद्देशादिविरुद्धांशं त्यक्त्वाऽविरुद्धांशं पिण्डमात्रमादाय भागत्यागलक्षणया यथाऽभेदं बोधयति, तथा तत्त्वमस्यादिमहावाक्यमपि जीवेश्वरयोर्मायान्तःकरणोपाधिं तन्निमित्तकिञ्चिज्ज्ञत्वसर्वज्ञत्वादिविरुद्धांशं त्यक्त्वा उभयत्रानुगताविरुद्धचिन्मात्रादानेनाभेदं बोधयति। अत्र महावाक्यार्थविषये याया अनुपपत्तयः परैरुद्भावितास्तास्सर्वास्सर्वैराचार्यैस्सर्वत्र पराक्रम्य निरस्ता इति नास्माभिस्तत्र यत्यते, संग्रहव्याख्याने प्रवृत्तत्वात्। नन्वेवं वाक्यजन्यज्ञानान्निवृत्तोपि संसारः सुषुप्तिप्रलययोरिव पुनरपि कदाचिदुद्भवेदित्याशङ्क्याह—यत्साक्षादित्यादिना। 'यत्साक्षात्करणात्' यस्य स्वप्रकाशनिष्प्रपञ्चसच्चिदान-

---

१ बृ. उ. ४-३-६.　२ बृ. उ, ६-४-१९

न्दस्वरूपस्य ब्रह्मणस्साक्षात्करणात् अपरोक्षतया सोहमस्मीतिज्ञानात् 'भवाम्भोनिधौ' संसारसमुद्रे 'पुनः' भूयः आवृत्तिः, आवर्तनमागमनं 'न भवेत्' न स्यात्, 'तरति शोकमात्मवित्'[1] 'ब्रह्म वेद ब्रह्मैव भवति'[2] 'न स पुनरावर्तते'[3] इत्यादिश्रुतिशतेभ्यः। सुषुप्तिप्रलययोर्मूलाज्ञानस्य विद्यमानत्वात् पुनरुत्थानम्, तस्य महावाक्यजन्यज्ञानेनात्र नष्टत्वान्न मुक्तस्य पुनरुत्थानमिति भावः। तस्मै....नम इति ॥ ३ ॥

---

नच जगतः कथमात्मसत्ताभानाभ्यां तद्वत्त्वम्? आत्मवत्स्वत एव सत्ताप्रकाशौ जगतो भवेतामित्याशङ्क्यम्, आत्मवज्जगतस्स्वतस्सत्त्वे तद्वदेवोत्पत्तिविनाशानुपपत्तेः, तद्वदेव करणाद्यनपेक्षया सर्वदा भानप्रसङ्गाच्च, न स्वतस्सत्ताप्रकाशौ भवतो जगतः; किन्तु आत्मसत्ताप्रकाशाभ्यामेव जगतोपि सत्ताप्रकाशौ ॥ नन्वेवं तर्हि सर्वस्य जगतः आत्मन्यध्यस्तत्वे भवन्मते कथं करणाद्यपेक्षा? प्रकाशरूपात्मसम्बन्धादेव सर्वं सर्वदा किमिति न भायात्? सर्वगतचैतन्यस्याविरोधेनाज्ञानावृतत्वे वा कथं कादाचित्कं जगतो भानम्? आज्ञानस्य चैतन्यातिरिक्तनिवर्तकाभावात्तस्य चाविरोधित्वादित्याशङ्क्याह—नानाच्छिद्रेति ॥

नानाच्छिद्रघटोदरस्थितमहादीपप्रभाभास्वरं
ज्ञानं यस्य तु चक्षुरादिकरणद्वारा बहिस्स्पन्दते।
जानामीति तमेव भान्तमनुभात्येतत्समस्तं जगत्
तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥४॥

---

१ छां. ७-१-३. २ मुण्डे. ३-२-१. ३ कालाग्नि. २.

'नानाच्छिद्रघटोदरस्थितमहादीपप्रभाभास्वरं' नानाच्छिद्रस्य अनेकरन्ध्रयुक्तस्य घटस्य कुम्भस्य उदरे अन्तः स्थितो वर्तमानो यो महादीपस्तस्य प्रभेव भास्वरं भासनशीलं दीपवत्तमोविरोधिलक्षणप्रकाशस्वभावं, 'यस्य' परमेश्वरस्य घटवदनेकच्छिद्रयुक्ते देहे अन्तःकरणे प्रतिबिम्बितस्य साक्षित्वेनावस्थितस्य स्वरूपभूतं 'ज्ञानं' चैतन्यं 'चक्षुरादिकरणद्वारा' चक्षुश्श्रोत्रादीनि यानि करणानि विषयोपलब्धिसाधनानि तद्वारा तच्छिद्रेण 'बहिः' विषयदेशे 'स्पन्दते' गच्छति । इन्द्रियाणां विषयसम्प्रयोगे तद्द्वारा चैतन्योपाध्यन्तःकरणे गच्छति सति तत्प्रतिबिम्बितं चैतन्यमपि गच्छति, गत्वा तं विषयं भासयतीत्यर्थः । अयमभिप्रायः—चैतन्यं तु स्वतोऽज्ञानाविरोध्यप्यन्तःकरणे प्रतिबिम्बितं सत्तद्विरोधि । अत एवान्तःकरणधर्माः रागादयस्स्वसत्तायां सर्वदा भासन्ते । घटपटादिविषयश्च बिम्बचैतन्ये ब्रह्मण्येवाध्यस्तस्तिष्ठति । अन्तःकरणेन चक्षुरादिद्वारा विषयदेशं गच्छता घटाद्यधिष्ठानबिम्बचैतन्यमुपाधीयते । तथा चैकोपाधिसम्बन्धादन्तःकरणे प्रतिबिम्ब्यावस्थितेन साक्षिचैतन्येन घटाद्यधिष्ठानचैतन्यमेकीभवति । ततस्साक्षिचैतन्येन तदज्ञाने निवृत्ते घटादिविषयो भासते न सर्वदा । अतोऽज्ञानावरणभङ्गार्थं चक्षुराद्यपेक्षेति न कोपि दोषः ।

केचित्तु—अचिद्रूपात्मनिष्ठज्ञानेन घटादिविषयो भासत इति वदन्ति । तन्न; आत्मनिष्ठज्ञानस्य जडस्य स्वप्रकाशस्य वा घटादिविषयेण संयोगादिसम्बन्धाभावात्, स्वरूपसम्बन्धस्य चातिप्रसक्तत्वात् ॥ केचित्तु विषयनिष्ठस्फुरणेन घटादिभानमिति कथयन्ति । तदपि न; विषयनिष्ठस्यात्मना सह

सम्बन्धाभावेन अहं जानामीति सम्बन्धप्रत्ययानुपपत्तेः । तस्मादस्मदुक्तप्रकारेण स्वप्रकाशसाक्षिचैतन्यसम्बन्धादेव घटादिविषयभानमिति । तदेतदाह—जानामीत्यादिना । घटादिकमहं जानामीति घटादिविषयसम्बद्धतया 'भान्तं' प्रकाशमानं 'तमेव' साक्षित्वेनावस्थितं परमेश्वरमेव 'अनु' पश्चात् 'एतत्' विविधशब्दप्रत्ययगम्यं 'समस्तं' सर्वं 'जगत्' 'भाति' प्रकाशते । अनुभानमपि न तस्य स्वतः, किन्तु अग्निं दहन्तमन्वयो दहतीतिवदध्यासादेवेत्यर्थः । तथा च श्रुतिः—'तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति' इति तस्मै...नमः ॥ ४ ॥

---

अत्र केचित्—सर्वमेतदभित्तिचित्रं, देहव्यतिरिक्तात्मन एवाभावात्, देहस्यैव गच्छामि तिष्ठामि स्थूलोहं कृशोहमित्यात्मत्वानुभवादिति वदन्ति ॥ अन्ये केचित् तान् हस्तेन वारयन्त आहुः —जीवात्मनिर्गमे शरीरमरणस्य दर्शनात्, वच्मि पश्यामि शृणोमीत्यादिबुद्धिदर्शनादिन्द्रियाण्येवात्मेति ॥ ततोप्यन्ये केचिदीषच्छुद्धबुद्धयश्चक्षुरादीन्द्रियनाशेपि प्राणसत्त्वे जीवनदर्शनात्, अन्यथाऽदर्शनात्, बुभुक्षितोहं पिपासितोहमित्यादिप्रतीतेश्च, प्राण एवात्मेति फणन्ति ॥ इतरे तु प्राणस्य बाह्यवायुवज्जडत्वेन भोक्तृत्वाद्यसम्भवात् मन एव चेतनं भोक्तृ चात्मेति वदन्ति ॥ योगाचारस्तु—मम मन इति भिन्नतया प्रतीयमानस्यात्मत्वासम्भवात्, क्षणिकविज्ञानमहमिति प्रतीयमानं बुद्धिशब्दापरपर्यायं संसारीति जल्पति ॥ तद्धिक्कृत्यान्यः कश्चिद्विद्युदभ्रनिमेषादिवत्क्षणिकस्य तस्यात्मत्वानुपपत्तेः, सुषुप्तौ तस्याप्यभावादन्यस्याप्यनुप-

१ मुण्ड. २. २. १०.

लब्धेश्शून्यमेवात्मेत्युद्गिरति ॥ एते च स्वस्वपक्षदार्ढ्यायेत-स्ततश्च यां काञ्चिच्छ्रुतिमादायोदाहरन्ति ॥ अन्ये चैतदन्यथात्मस्वरूपं फणन्ति॥ सर्वे ते दैवोपहतचित्ता भ्रान्तास्सकलश्रुतिस्मृतीतिहासपुराणन्यायविद्वत्प्रत्यक्षविरुद्धार्थपरिग्राहकाः । नैतेषां मार्ग आत्मनश्श्रेयोर्थिभिस्स्वप्नेप्यनुसरणीय-इत्यभिप्रेत्याह—देहं प्राणमपीति ॥

**देहं प्राणमपीन्द्रियाण्यपि चलां बुद्धिं च शून्यं विदुः स्त्रीबालान्धजडोपमास्त्वहमिति भ्रान्ता भृशं वादिनः । मायाशक्तिविलासकल्पितमहाव्यामोहसंहारिणे तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥ ५ ॥**

'देहं' सशिरस्कं पिण्डं, 'प्राणं' पञ्चवृत्तिकं मुखनासिकसञ्चारिणम्, 'इन्द्रियाणि' चक्षुरादीनि तत्तद्गोलकवृत्तीनि रूपादिग्राहकाणि, 'चलां' क्षणिकां सन्ततोदयां 'बुद्धिं' विज्ञानं,-'शून्यं' तुच्छम्, चकारात्तार्किकाद्यभिमतात्मानम्, 'वादिनः-चार्वाकादयः, 'स्त्रीबालान्धजडोपमाः' स्त्रीबालान्धजडवद्विवेकविज्ञानरहिताः, अत एव 'भ्रान्ताः' तत्त्वमन्यथा प्रतिपद्यमानाः, 'अहमिति विदुः' आत्मत्वेन जानन्ति, अन्यानुपदिशन्ति चेत्यर्थः ।

नन्वेते वादिनः परीक्षका अपि किमित्येवं नास्तिकास्सन्तोन्यथान्यथातत्त्वं प्रतिपद्यन्ते? इति चेदीश्वरानुग्रहाभावात् । ये त्वास्तिकाश्श्रुतिस्मृत्युक्तमार्गेण कर्मानुष्ठानेन भगवन्तं परमेश्वरं सेवन्ते, तेषां परमेश्वरप्रसादान्नैतादृशो व्या-

मोह इत्यभिप्रेत्याह—मायेत्यादिना । 'मायाशक्तिविलासकल्पितमहाव्यामोहसंहारिणे' भगवतः परमेश्वरस्यानाद्यनिर्वचनीया या मायाशक्तिः परव्यामोहिका तस्याः विलासेनैकदेशेन कल्पितो यो महाव्यामोहः महानन्तोपरिमाणो व्यामोहो देहाद्यात्मत्वभ्रमः, तं संहर्तुं नाशयितुं शीलमस्येति स तथोक्तः । तस्मै ....नमः । तथा चोक्तं श्रीभागवते—

येषां स एव भगवान्दययेदनन्त-
स्सर्वात्मनाश्रितपदो यदि निर्व्यलीकम् ॥
ते दुस्तरामतितरन्ति च देवमायां
नैषां ममाहमितिधीश्श्वसृगालभक्ष्ये ॥ इति ॥ ५ ॥

ननु शून्यवादिना सुषुप्तौ कस्याप्यनुपलम्भाच्छून्यमेवात्मेति यदुक्तं, तस्य किं समाधानम्? इत्याशङ्क्य, सुषुप्तावात्मास्तित्वं साधयन् समाधत्ते—राहुग्रस्तेति ॥

**राहुग्रस्तदिवाकरेन्दुसदृशो मायासमाच्छादना-**
**त्सन्मात्रः करणोपसंहरणतो योभूत्सुषुप्तः पुमान् ।**
**प्रागस्वाप्समिति प्रबोधसमये यः प्रत्यभिज्ञायते**
**तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥ ६ ॥**

'यः पुमान्' प्रत्यग्रूपः परमेश्वरः 'करणोपसंहरणतः' विशेषविज्ञानहेतुचक्षुरादिकरणानामुपसंहारात् 'सन्मात्रः' पूर्णानन्दादिरूपेण स्फुटमप्रकाशमानतया केवलं सन्मात्रेणावस्थितस्सन् 'सुषुप्तोभूत्' सुप्तिं प्राप्तोभूत् । करणाभावेपि पूर्णानन्दभानवतो मुक्तात्मनस्सकाशात्सुषुप्तात्मनो वैषम्यमाह—मायासमाच्छादनादिति । माययाऽऽत्माविद्यया समाच्छादनादावरणात्, सन्मात्र इति सम्बन्धः । स्फुटमप्रकाशमान-

१ स्कं. २-७-४२.

स्य स्वरूपतस्सत्त्वे दृष्टान्तमाह—राहुग्रस्तेति। 'राहु ग्रस्तदिवाकरेन्दुसदृशः' राहुणा सैंहिकेयेन ग्रस्तौ गृहीतौ यौ दिवाकरेन्दू सूर्यचन्द्रौ तत्सदृशः तत्समानस्सन्, सुषुप्तोभूदिति सम्बन्धः। यथा राहुणा ग्रस्तो दिवाकरश्चन्द्रो वा स्फुटं न प्रकाशत इत्येतावता दिवाकरस्य चन्द्रमसो वा नासत्त्वम्; तद्वत्करणानामुपसंहारान्माययावृतत्वाच्च सुषुप्तौ स्फुटमात्मा न भासत इत्येतावता नात्मनोसत्त्वमित्यर्थः॥

ननु राहुग्रस्तस्य सूर्यस्य चन्द्रमसो वा स्फुटप्रकाशाभावेपि चक्षुषाऽविशेषतस्सर्वैर्ग्रहणादस्ति सत्त्वम्। न तद्वदात्मनः केनचित्सत्त्वमनुभूयत इत्याशङ्क्य, सुषुप्तावात्मनोप्यविशेषतो भानं साधयति—प्रागस्वाप्समित्यादिना। 'यः सुषुप्तिकालीनात्मा 'प्रबोधसमये' सुषुप्तित उत्थानसमये, 'प्रत्यभिज्ञायते'। कथम्? 'प्राक्' योहम् 'अस्वाप्सं' स इदानीं जागर्मीति। न च तदाननुभूतस्य प्रत्यभिज्ञानं सम्भवति, अन्यत्र देवदत्तादननुभूते प्रत्यभिज्ञानादर्शनात्। न च तदा करणेनात्मानुभवः, इन्द्रियादिकरणानां सुषुप्तावभावात्। अतस्स्वप्रकाशस्यात्मनस्सत्त्वान्न तदा शून्यत्वम्; नापि तस्य क्षणिकत्वम्; नापि जडत्वम्। उक्तयुक्तेरेव॥

सुषुप्तिकाले सकले विलीने तमोभिभूतस्सुखरूपमेति।
पुनश्च जन्मान्तरकर्मयोगात्स एव जीवस्स्वपिति प्रबुद्धः॥[1]

'सता सोम्य तदा सम्पन्नो भवति'[2] इत्यादिश्रुतिश्चात्मनस्सच्चिदानन्दरूपत्वेन सुषुप्ताववस्थानं दर्शयति। आत्मनस्सुखरूपत्वं चोत्थितेन तेनानुसन्धीयते सुखमहमस्वाप्समिति। अतो न कोपि दोष इतिभावः॥ ६॥

---

१ कैवल्योपनिषत्. २ छां. ६-८-१.

इदानीं मुञ्जादिषीकामिव देहादिभ्यो विविच्य सच्चिदानन्दरूपं प्रत्यगात्मानं प्रदर्श्य, तस्य परमेश्वराभेदं श्रुतिगुर्वीश्वरप्रसादलभ्यं प्रदर्शयन्नाह—बाल्यादिष्विति ॥

**बाल्यादिष्वपि जाग्रदादिषु तथा सर्वास्ववस्थास्वपि**
**व्यावृत्तास्वनुवर्तमानमहमित्यन्तस्स्फुरन्तं सदा ।**
**स्वात्मानं प्रकटीकरोति भजतां यो मुद्रया भद्रया**
**तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥७॥**

'बाल्यादिषु' बाल्यं शैशवं, तदादिषु शैशवकौमारयौवनमध्यवयस्स्थाविररूपासु, 'जाग्रदादिषु' जाग्रत्स्वप्नसुषुप्तिमूर्छाजन्मजरामरणरूपासु 'तथा' अन्यास्वप्यवान्तरासु दर्शनश्रवणादिरूपासु कर्तृत्वभोक्तृत्वादिरूपासु च 'सर्वास्ववस्थासु' दशासु 'व्यावृत्तासु' परस्परं व्यावर्तमानासु 'अनुवर्तमानम्' अनुगततया सर्वास्ववस्थासु वर्तमानम् । अयं भावः—यो ह्यसत्यजडानानन्दरूपासु सर्वास्ववस्थासु व्यावर्त्तमानासु योहं सुप्तौ स्वप्नमद्राक्षं सोहमिदानीं जागर्मीति अवस्थात्रये, योहं बालो युवा चाभूवं सोहमिदानीं वृद्धोस्मीति बाल्यादिष्वपि च सत्त्वेनानुवर्तमानोनुभूयते, तथा द्रष्टृत्वेनाभिमतेषु चक्षुरादिषु व्यावर्तमानेषु स्वयं तत्सकलसाक्षित्वेन यश्चिद्रूपस्सदानुवर्तमानोनुभूयते, तथा प्रियत्वेनाभिमतवित्तपुत्रपिण्डादिषु व्यावर्त्तमानेषु च यस्स्वयं सदा प्रीतिविषयः सर्वशेषित्वेन निरतिशयप्रीतिविषयतया आनन्दरूपत्वेनानुवर्तमानोनुभूयते, तद्वदेवाहम्बुद्धिविषयतयात्मत्वेनाभिमतेषु देहादिभोक्तृषु व्यावर्तमानेषु यश्च स्वयमहम्बुद्धिमव्यभिचरन् सदा आत्मत्वेनानुवर्तमानोनुभूयते, ततस्सद्रूपत्वं चिद्रूपत्वमानन्द-

रूपतया प्रियत्वम् अहम्बुद्धिविषयतया प्रत्यक्त्वं च यः कदापि न व्यभिचरति स एव त्वम्पदलक्ष्यार्थ आत्मेति। तथा च तापनीयश्रुतिः—'तं वा एतमात्मानं जाग्रत्यस्वप्नमसुषुप्तं स्वप्नेऽजाग्रतमसुषुप्तं सुषुप्तेऽजाग्रतमस्वप्नं तुरीयेऽजाग्रतमस्वप्नमसुषुप्तमव्यभिचारिणं नित्यानन्दसदैकरसं ह्येव चक्षुषो द्रष्टा श्रोत्रस्य द्रष्टा वाचो द्रष्टा मनसो द्रष्टा बुद्धेर्द्रष्टा प्राणस्य द्रष्टा तमसो द्रष्टा सर्वस्य द्रष्टा'[1] इति। एतदेवाह—अहमित्यन्तस्स्फुरन्तं सदेति। 'अन्तः' शरीरादिषु मध्ये 'अहमिति' अहम्बुद्धिविषयत्वेन 'सदा' सर्वेष्वपि कालेषु 'स्फुरन्तं' भासमानम्, उपलक्षणमेतत्, सत्त्वेन प्रियत्वेन च सदा स्फुरन्तमित्यपि द्रष्टव्यम्। एवम्भूतं प्रत्यगात्मानं 'यः' परमेश्वरः, 'स्वात्मानमेव' स्वं 'सत्यं ज्ञानमनन्तं ब्रह्म'[2] 'विज्ञानमानन्दं ब्रह्म'[3] इत्यादिषु श्रुतिषु सच्चिदानन्दात्मकत्वेन त्रिविधपरिच्छेदशून्यतया च प्रसिद्धः परमेश्वर एवात्मा स्वरूपं यस्य प्रत्यगात्मनः, न तु कर्त्रादिरूपेण प्रतीयमानः आत्मा सः स्वात्मा प्रत्यगात्मा, तं स्वात्मानं ब्रह्माभिन्नमिति यावत्, 'भद्रया' शोभनया 'मुद्रया' करकलितज्ञानमुद्रया 'भजतां' स्वभक्तानां 'प्रकटी करोति' तेषां प्रत्यगात्मानं ब्रह्मस्वरूपत्वेनाप्रकटं प्रकटं करोति स्फोरयति। तस्मै...नमः॥

बाल्यादिषु तथा जाग्रदादिष्वपि सर्वास्ववस्थासु व्यावृत्तास्वनुवर्तमानं सदाऽन्तरहमिति स्फुरन्तं भजतां प्रत्यगात्मानं यो भद्रया मुद्रया स्वात्मानं प्रकटी करोति तस्मै...नम इत्यन्वयः॥ ७॥

ननु ब्रह्मव्यतिरिक्तं चेत्किमपि न वस्त्वस्ति, तर्हि कथं

---

१ नृसिंहोत्तरता. २ खण्डे. २ तै. उ. २-१. ३ बृह. ५-९-२८.

परमार्थोपदेशादिव्यवहारः ? न हि जातु कश्चित्तत्र बद्धोस्ति, येन बन्धनिवृत्तये विद्योपदेशस्स्यात्, बन्धहेतोः कस्याप्यभावात् । नापि विद्यावतो मुक्तिस्सम्भवति, तद्धेतुगुरुशास्त्रादीनामभावादित्याशङ्क्य अनाद्यनिर्वचनीयपरमात्माध्यस्तमायावशादेव सर्वो व्यवहारो ब्रह्मसाक्षात्कारपर्यन्तं घटत इत्यभिप्रेत्याह—विश्वं पश्यतीति ॥

**विश्वं पश्यति कार्यकारणतया स्वस्वामिसम्बन्धत-**
**शिष्याचार्यतया तथैव पितृपुत्राद्यात्मना भेदतः ।**
**स्वप्ने जाग्रति वा य एष पुरुषो मायापरिभ्रामित;**
**तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥८॥**

'पुरुषः' पूर्णः 'यः' श्रुत्यन्तप्रसिद्धः परमेश्वरो 'मायापरिभ्रामितः' स्वोपाधिभूतमायया मलिनसत्त्वप्रधानया कार्यकारणसङ्घाताकारेण परिणतया स्वेन प्रविष्टया परिभ्रामितः बहुविधं भ्रमं प्रापितः 'एषः' सर्वप्राण्यपरोक्षजीवस्सन् संसारित्वेन भावितः, 'विश्वं' जगत् 'भेदतः' बहुभेदभिन्नतया भ्रमेण 'पश्यति' अवलोकयति । भेदमेव दर्शयति—कार्यकारणतयेत्यादिना । अयमर्थः—यद्यपि परमार्थतो ब्रह्मव्यतिरिक्तं किमपि नास्त्येव, 'नेह नानास्ति किञ्चन' इत्यादिना श्रुत्या निषेधात्; तथापि अनाद्यनिर्वाच्याविद्यावशान्मुधैव भ्रान्तो जीवः प्रपञ्चं बहुभेदभिन्नं पश्यति, निद्रापरवश इवानेकविधं स्वप्नम् । तस्य च वस्तुतो ब्रह्मैव सन्तमात्मानं निखिलानर्थसङ्कुलया मायया भ्राम्यतः स्वभ्रान्तिसिद्धगुरुशास्त्रन्यायादिभ्यः विद्योत्पत्तावविद्या सवा-

१ बृ. ३-९-२८.

सना निवर्तते, निद्राणस्येव स्वाप्नव्याघ्रदर्शनसमुपजातभयेन प्रबुद्धस्य स्वप्नः । ततस्संसारान्मुक्तः स्वस्वरूपे सच्चिदानन्दात्मनि निरतिशयमहत्त्वसम्पन्न एव रममाणोवतिष्ठते ।तदुक्तं सर्वज्ञात्ममुनिभिः—

तस्माद्ब्रह्माविद्यया जीवभावं प्राप्य स्थित्वा तावके तु स्वरूपे। त्वच्चित्तेन स्पन्दितं विश्वजात*माकाशादि क्ष्मावसानं च पश्येः ॥ स्वीयाविद्याकल्पिताचार्यवेदन्यायादिभ्यो जायते तस्य विद्या ।विद्याजन्मध्वस्तमोहस्य तस्य स्वीये रूपेवस्थितिस्स्वप्रकाशे ॥ इति ततस्सर्वस्य परमार्थतो ब्रह्ममात्रत्वेपि मायावशाद्भ्रान्त्या सर्वमुपपद्यत इति।कार्यं जन्यम्, कारणं जनकम्, स्वं गृहक्षेत्रधनादि, स्वामी तद्वान् देवदत्तादिः, शिष्यः विद्याग्रहणार्थं विधिवद्गुरुमुपसन्नः, आचार्यः विद्योपदेष्टा, पिता निषेक्ता, पुत्रस्तच्छुक्रसम्भवः, इत्यादिरूपेण विश्वं यः पश्यति तस्मै....नम इति सम्बन्धः ॥ ८ ॥

इदानीमुक्तरूपब्रह्मापरोक्षज्ञाने मन्दाधिकारिणामष्टमूर्त्युपासनं क्रममुक्तिदायकम्, उत्तमाधिकारिणां श्रोतव्यादिश्रुतिसिद्धवेदान्ततद्विषयब्रह्मविचारस्साधनमित्यभिप्रेत्याह—भूरम्भांसीति ॥

**भूरम्भांस्यनलोऽनिलोम्बरमहर्नाथो हिमांशुः पुमा-**
**नित्याभाति चराचरात्मकमिदं यस्यैव मूर्त्यष्टकम्।**
**नान्यत्किञ्चन विद्यते विमृशतां यस्मात्परस्मा-**
**द्विभोस्तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणा-**
**मूर्तये ॥ ९ ॥**

'भूः' पृथिवी, 'अम्भांसि' जलानि, 'अनलः' अग्निः, 'अनि-

---

* जीवजातमिति मुद्रितसंक्षेपशारीरककोशपाठः

लो' वायुः, 'अम्बरम्' आकाशः, 'अहर्नाथः' सूर्यः, 'हिमांशुः' चन्द्रः, 'पुमान्' सकलकर्मविद्याधिकारी जीवः, 'इति' एवम्प्रकारेण, 'यस्यैव' परमेश्वरस्य सर्वज्ञस्य सर्वशक्तेः सच्चिदानन्दाद्वयस्य सदाशिवस्यैव 'मूर्त्यष्टकं' मूर्तीनां विग्रहभूतानामष्टकम् 'आभाति' आ समन्ताद्भाति। अयमर्थः—उपासकस्स्वदेहे वर्तमानपञ्चभूतानि व्यष्टिभूतानि समष्टिभूतैः प्राणापानौ च सूर्यशशाङ्काभ्यामेकीकृत्य, पञ्चभूतात्मकशरीराभिमानिनं स्वात्मानमष्टमूर्तिपरमेश्वरेणैकीकृत्य, सकलव्यापी अष्टमूर्त्यात्मकस्सदाशिवोस्मीति चिन्तयेत् । ततो भावनातिशयेन तत्सायुज्यं प्राप्य सर्वैश्वर्यसम्पन्नोन्ते तत्प्रसादासादिततत्त्वज्ञानेन तत्त्वसाक्षात्कारेण विमुच्यत इति । 'विमृशतां' तत्त्वं विधिवद्गुरुश्रुतिभ्यो युक्त्या चानिशं विचारयतां पुरुषाणां 'परस्मात्' सर्वकारणात् 'विभोः' विविधप्रपञ्चात्मना भवतः विवर्तमानात् 'यस्मात्' सर्वाधिष्ठानात् सच्चिदानन्दात्मकात्परमेश्वरादन्यत् पृथक् 'किञ्चन' किञ्चिदपि न विद्यते न भवति, सर्वस्य तस्मिन् परमेश्वरेध्यस्तत्वेन तन्मात्रत्वात् । तथा चोक्तं महिम्नस्तवे[1]—

त्वमर्कस्त्वं सोमस्त्वमसि पवनस्त्वं हुतवह-
स्त्वमापस्त्वं व्योम त्वमु धरणिरात्मा त्वमिति च ।
परिच्छिन्नामेवं त्वयि परिणतां बिभ्रति गिरं
न विद्मस्तत्तत्त्वं वयमिह तु यत्त्वं न भवसि ॥ इति ।

श्रुतिश्च—

'विश्वं भूतं भुवनं चित्रं बहुधा जातं जायमानं च यत् ।
सर्वो ह्येष रुद्रस्तस्मै रुद्राय नमो अस्तु[2] ।,

---

१ श्लो. २७. २ तै. उ. ४-२४.

'यस्मात्परं नापरमस्ति किञ्चिद्यस्मान्नाणीयो न ज्यायोस्ति कश्चित्। वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्ण पुरुषेण सर्वम्[1]।

इत्याद्याः। स्तब्धः निश्चलः, दिवि स्वप्रकाशे स्वरूपे। तथा चोक्तरूपब्रह्मात्मज्ञानादुत्तमाधिकारिणामिहैव सच्चिदानन्दाद्वयपरशिवरूपेणावस्थानलक्षणा मुक्तिरासाद्यते, 'अत्र ब्रह्म समश्नुते'[2] इत्यादिश्रुतेरिति भावः। तस्मै ज्ञानोपदेष्ट्रे गुरुरूपाय दक्षिणामूर्तये परमेश्वराय नमोस्त्विति ॥ ९ ॥

---

इदानीमेतत्स्तोत्रपाठादौ प्रवृत्तानां पुरुषधौरेयाणामवश्यंभावि फलं कीर्तयन् स्तोत्रमुपसंहरति—सर्वात्मत्वमिति ॥

**सर्वात्मत्वमिति स्फुटीकृतमिदं यस्मादमुष्मिंस्तवे तेनास्य श्रवणात्तदर्थमननाद्ध्यानाच्च सङ्कीर्तनात्। सर्वात्मत्वमहाविभूतिसहितं स्यादीश्वरत्वं स्वतस्सिध्येत्तत्पुनरष्टधा परिणतं चैश्वर्यमव्याहतम् ॥ १० ॥**

'इति' उक्तप्रकारेण 'अमुष्मिंस्तवे' अस्मिन् स्तोत्रे 'इदं' श्रुतिषु 'इदं सर्वं यदयमात्मा'[3] इत्यादिषु श्रूयमाणं 'सर्वात्मत्वं' प्रत्यगात्मनस्स्वरूपत्वं 'स्फुटीकृतं' स्फुटमावेदितं 'यस्मात्' 'तेनास्य' स्तोत्रस्य 'श्रवणात्' गुरुतो विधिवच्छ्रवणात् 'तदर्थमननात्' श्रुतस्यार्थस्य युक्तिभिरनुचिन्तनात् 'ध्यानात्' श्रवणमननाभ्यां निर्णीतस्य तथैव सोहं सर्वात्मा परमेश्वरोस्मीति विजातीयप्रत्ययतिरस्कारेण सजातीयप्रत्ययैकविषयीकरणात् 'सङ्कीर्तनात्' सम्यक्परेभ्यः कथनाच्च

---

१ तै. उ. ४-१२. २ कठो. ६-१४. ३ बृ. ४-५-७.

'सर्वात्मत्वमहाविभूतिसहितं' सर्वात्मत्वमेव महाविभूतिः महती सिद्धिरणिमाद्यपेक्षया, तस्य त्रिविधपरिच्छेदशून्यत्वात्, तया सहितं युक्तम् 'ईश्वरत्वं' सत्यज्ञानानन्दलक्षणपरमेश्वरत्वं, 'तत्' श्रुतिप्रसिद्धं 'स्वतः' एव नित्यं विद्यमानं 'स्यात्' भवेत्, अधुना ज्ञायत इत्यर्थः । 'पुनः' भूयः 'अष्टधा' अष्टप्रकारेण 'परिणतं' मायापरिणामरूपम् 'ऐश्वर्यं च' अणिमादिकम् 'अव्याहतं' क्वचिदप्यप्रतिहतं 'सिध्येत्'—'स एकधा भवति त्रिधा भवति'[1] 'स यदि पितृलोककामो भवति सङ्कल्पादेवास्य पितरस्समुपतिष्ठन्ते'[2] इत्यादिश्रुत्युक्तं सर्वं भवेदित्यर्थः ॥ १० ॥

एवमेषा कृता व्याख्या दक्षिणाशामुखस्तुतेः ।
यथामति तया तुष्टो दक्षिणामूर्तिरस्तु नः ॥

॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यकैवल्यानन्दयोगीन्द्रपादकमलभृङ्गायमाणस्वयम्प्रकाशयतिविरचितश्रीदक्षिणामूर्तिस्तोत्रव्याख्यालघुतत्त्वसुधाख्या समाप्ता ॥



१ छां. ७-२६. २ छां. ८-२.

ॐ

श्रीदक्षिणामूर्तये नमः.

# मानसोल्लासनामकं
## श्रीदक्षिणामूर्तिस्तोत्रवार्तिकं,
### वृत्तान्ताख्यव्याख्यानसमेतम्.

मङ्गलं दिशतु मे विनायको
मङ्गलं दिशतु मे सरस्वती ।
मङ्गलं दिशतु मे महेश्वरी*
मङ्गलं दिशतु मे सदाशिवः† ॥ १ ॥

प्रोद्यच्छाखमहावटद्रुमतले योगासनस्थं प्रभुं
प्रत्यक्तत्त्वबुभुत्सुभिः प्रतिदिशं प्रोद्वीक्ष्यमाणाननम् ।
मुद्रां तर्कमयीं दधानममलं कर्पूरगौरं शिवं
हृद्यन्तः कलये स्फुरन्तमनिशं श्रीदक्षिणामूर्तिकम् ॥१॥
नत्वाद्यान् शङ्कराचार्यमुख्यान्सर्वान् गरीयसः ।
मानसोल्लासवृत्तान्तं वर्णयामि यथामति ॥२॥

इह हि भगवान् भाष्यकारः श्रीमच्छङ्कराचार्यनामा मन्दमतीन् तत्त्वजिज्ञासूननुग्रहीतुं दक्षिणामूर्तिस्तोत्रव्याजेन समस्तवेदान्तरहस्यमाविश्चकार दशभिः पद्यबन्धैः । तच्छिष्यैर्विश्वरूपाचार्यैः सुरेश्वरापरनामभिः तत्पद्यबन्धार्थतत्त्वं तात्पर्यतो मानसोल्लासनाम्ना वार्तिकात्मना ग्रन्थसन्दर्भेणा-

* ख.—श्वरो. † ख.—महेश्वरी.

विष्कृतम्। तमिमं ग्रन्थं यथाशक्ति विवृणोमि । तत्र शिष्टाचारसंरक्षणाय कृतमङ्गलाचरणद्योत्योऽयमाद्यश्लोकः–मङ्गलं दिशत्वित्यादि ॥ १ ॥

**आत्मलाभात्परो लाभो नास्तीति मुनयो विदुः ।**
**तल्लाभार्थं कविस्स्तौति स्वात्मानं परमेश्वरम् ॥ २ ॥**

अस्य स्तोत्रस्य वेदान्तशास्त्रप्रकरणरूपत्वात्, तस्य च शास्त्रैकदेशसम्बद्धत्वादिलक्षणत्वात्तद्दर्शनाय शास्त्रीये विषयप्रयोजने तावदाह—आत्मलाभादित्यादिना ॥ आत्मा प्रत्यक्तमः सर्वसाक्षी, तस्य लाभः परागर्थसम्भेदनेनोद्धृत्य ब्रह्मरूपेणावगतिः, तल्लाभात् परोन्यो वोत्कृष्टो वा लाभो नास्तीति मुनयः आपस्तम्बादयो विदुः, 'आत्मलाभान्न परं विद्यते*' इत्यादिभिः स्मृतिवचनैः उक्तवन्त इत्यर्थः । अतो निरस्ताज्ञानतत्कार्यप्रपञ्चब्रह्मात्मनावस्थानं प्रयोजनं 'ब्रह्म वेद ब्रह्मैव भवति†' इत्यादिशास्त्रसिद्धमुक्तम् ॥ इदानीं विषयमाह—तल्लाभार्थमिति । स्वात्मानं परमेश्वरमिति सामानाधिकरण्यात्त्वम्पदार्थैक्यं शास्त्रविषयो दर्शितः ॥ २ ॥

**स्वेच्छया सृष्टमाविश्य विश्वं यो मनसि स्थितः ।**
**स्तोत्रेण स्तूयतेऽनेन स एव परमेश्वरः ॥ ३ ॥**

एवं शास्त्रीयविषयप्रयोजने स्वरूपतो निर्दिश्य, इह स्तोत्रे सम्पादयितुमस्य प्रकरणत्वं स्फुटयति–स्वेच्छयेति ॥ स्वेच्छा नाम स्वशक्तिर्मायाख्या, तया सृष्टं चिदात्मनि विवर्तितं विश्वं स्थूलं सूक्ष्मं च समष्टिव्यष्टिरूपं क्रमेणाविश्य सूर्यबिम्बमिवोदकुम्भे तत्सन्निहिते कुड्यादौ वाऽऽभासद्वारा प्रविश्य

---

*आप. ध. १-२२-२. †मु. उ. ३-२-९.

यो मनसि वृत्तिमदन्तःकरणे स्थितः तत्र विशेषरूपेणाभिव्यक्तिमुपगतः, स एव परमेश्वरोऽनेन स्तोत्रेण स्तूयते, स्वाध्यस्तप्रपञ्चव्युदासेन चिदेकरसतया प्रत्यगभेदेन प्रतिपाद्यत इत्यर्थः। तथैवं सति शास्त्रैकदेशसम्बद्धत्वमस्योपपादितम्॥३॥

**अस्ति प्रकाशत इति व्यवहारः प्रवर्तते।**
**तच्चास्तित्वं प्रकाशत्वं कस्मिन्नर्थे प्रतिष्ठितम्॥४॥**

इदानीं शास्त्रकार्यान्तरे स्थितत्वमस्य लक्षणं सम्प्रदर्शयन् तत्राधिकारिणमुपस्थापयति–अस्ति प्रकाशत इतीति॥इह यादृच्छिकानेकपूर्वजन्मकृतपुण्यपुञ्जपरिपाकवशाद्विवेकवैराग्यसम्पन्नः शमादिगुणयुक्तश्च सन्नापातालोचनया सर्वपदार्थेषु दृश्येषु व्यवहारकाले अवभासमानमस्तित्वं प्रकाशत्वं च न दृश्यधर्मौ, दृश्यत्वव्यावृत्तावपि अस्तित्वप्रकाशत्वयोरव्यावृत्तेरित्यवगम्य, किन्धर्मावेतौ सर्वदृश्येष्वनुगतावित्यनध्यवसितमतिः कश्चिच्छिष्यः प्रष्टोपस्थाप्यते। एवमुत्तरेष्वपि प्रश्नेष्वापातदर्शननिबन्धनत्वं योज्यम्। तत्रायमक्षरार्थः—अस्ति प्रकाशत इति सर्वपदार्थेषु व्यवहारः प्रवर्तत इति त्वविवादम्। तच्चास्तित्वं प्रकाशत्वं च कस्मिन्नर्थेऽन्यनिरपेक्षं प्रतिष्ठितं पर्यवसितमिति पृच्छन्तं 'वक्तुमारभते गुरुः' इति वक्ष्यमाणेनान्वयः॥ ४॥

**किं तेषु तेषु वार्थेषु किं वा सर्वात्मनीश्वरे।**
**ईश्वरत्वं च जीवत्वं सर्वात्मत्वं च कीदृशम्॥ ५॥**

तत्र जिज्ञासानिमित्तं संशयमेवाह—किं तेष्विति॥ यत्र-यत्र तदुभयमुपलभ्यते तत्रैव प्रतिष्ठितं प्रतिव्यक्ति किं भिन्नं परिमाणवदित्येका संशयकोटिः, किं वा विशेषोल्लेखमन्तरे-

णानयोः प्रतिव्यक्ति स्वरूपभेदानवगमात् सामान्यमिव तत्तद्व्यक्तिषु सर्वानुस्यूते एकस्मिन् तदुभयं प्रतिष्ठितमिति द्वितीया कोटिः । तस्य 'सर्वात्मनीश्वरे' इति विशेषनिर्देशः 'ईशा वास्यमिदँ सर्वम् *' 'तस्य लोकः स उ लोक एव †' इत्यादिश्रुत्या आपातदर्शननिबन्धनः । पुनरपि श्रुत्यापातदर्शनकृतं संशयान्तरनिबन्धनं प्रश्नमुत्थापयति—ईश्वरत्वं चेति। किमीश्वरत्वं जगत्कर्तुर्महाराजकुलालादिवत्ताटस्थ्येन?, किं वा रज्ज्वादिवत् स्वाध्यस्तस्य सत्तादिप्रदत्वेनाधिष्ठातृतया वा? । तथा जीवत्वमपि प्रत्यगात्मनः स्वाभाविकं? किं वा परोपाधिनिबन्धनमिति? । तथा सर्वात्मत्वं च कीदृशं गौणं मुख्यं वा? इति विमर्श इत्यर्थः ॥ ५ ॥

**जानीयात्तत्कथं जीवः किं तज्ज्ञानस्य साधनम् ।**
**ज्ञानात्तस्य फलं किं स्यादेकत्वं च कथं भवेत्॥६॥**

पुनः प्रश्नान्तरं—जानीयादिति॥ यदि सत्तादिप्रदत्वेनाधिष्ठातृत्वमेवेश्वरत्वं, परोपाधिनिमित्तं च जीवत्वं सुवर्णादेरिव स्वविकारैर्मुख्यमेव च सर्वात्मत्वं भवेत्, तत्सर्वं जीवस्तत्त्वतः कथं जानीयात्? कीदृशेन ज्ञानेनावगन्ता भवेदित्यर्थः । तस्य तादृशज्ञानस्य च किं साधनं? केन साधनेन तदुत्पद्यत इत्यर्थः । तस्य जीवेश्वरतत्त्वस्य ज्ञानात्किं फलं स्यात्? स्वर्गादिवत् प्रयत्नसिद्धम्, अप्रयत्नसिद्धं वा कण्ठगतचामीकरवदित्यर्थः । किं च—जीवेश्वरयोरेकत्वं च तादात्म्यं कथं भवेत्? विरुद्धस्वभावत्वात् गौणं श्रूयमाणमेकत्वं, किं वा विरोधस्याभासत्वात् मुख्यमेवेति ॥ ६ ॥

---

*ई. उ. १. †बृ. उ. ६-४-१३.

सर्वज्ञस्सर्वकर्ता च कथमात्मा भविष्यति ।
शिष्यं प्रतीत्थं पृच्छन्तं वक्तुमारभते गुरुः ॥ ७ ॥

जीवेश्वरयोरैक्यायोगे तदेव विरुद्धधर्मत्वमुपन्यस्यति—सर्वज्ञ इति ॥ आत्मा जीवः किञ्चिज्ज्ञः किञ्चित्कर्ता सर्वकर्ता परमेश्वरः कथं भविष्यति? । यद्वा—सर्वज्ञः सर्वकर्ता च सन्नीश्वरः कथं तद्विपरीतात्मा भविष्यति? इति योजना । एषां प्रश्नानामुत्तरं वक्तुं स्तोत्रमुत्थापयति—शिष्यमिति । इत्थं पृच्छन्तं शिष्यं प्रति प्रतिवचनं क्रमेण वक्तुं गुरुरारभत इति योजना ॥ ७ ॥

"विश्वं दर्पणदृश्यमाननगरीतुल्यं निजान्तर्गतं
पश्यन्नात्मनि मायया बहिरिवोद्भूतं यथा निद्रया ।
यस्साक्षात्कुरुते प्रबोधसमये स्वात्मानमेवाद्वयं
तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥१॥"

तत्रास्ति प्रकाशत इत्यादिसार्धश्लोकेन कृतप्रश्नस्य साक्षादुत्तरत्वेनाद्यश्लोकमुपादत्ते—विश्वं दर्पणेति ॥ एषास्याक्षरयोजना—तस्मै श्रीदक्षिणामूर्तये इदं नमः नमस्करणमस्त्विति क्रियाकारकयोजना । दक्षिणाभिमुखा मूर्तिर्यस्य स दक्षिणामूर्तिः शिवः । श्रीमांश्च श्रीरित्युच्यते । तथा च श्रीस्तत्त्वबोधात्मिका आविष्कृता शोभा अस्मिन्नस्तीति श्रीमान्, स चासौ दक्षिणामूर्तिश्चेति श्रीदक्षिणामूर्तिः, तस्मै इत्यर्थः । तस्य विशेषणं श्रीगुरुमूर्तय इति । गृणाति तत्त्वज्ञानमुपदिशति शिष्येभ्य इति गुरुः, श्रीमांश्चासौ गुरुश्च पूर्ववल्लक्षणया श्रीगुरुः, तस्य मूर्तिरिव मूर्तिर्यस्य स तथा । तस्मै । अनेन स्वोपदेष्टृगुर्वात्मना चास्य ध्येयत्वं विवक्षितम् । देव-

तारूपेण गुरुरूपेण च गृहीतमूर्तिर्द्वयायेत्युक्तं भवति। तच्छ-
ब्दापेक्षितं यच्छब्दं वदन् विश्वस्य सत्तास्फुरणयोर्निरपेक्षम-
धिष्ठानं य ईश्वरः स एष दक्षिणामूर्तिर्गुर्वात्मेति प्रश्नोत्तरं प्र-
कटयति—विश्वमित्यादिना॥ यो निजान्तर्गतं विश्वमात्मनि
मायया बहिरुद्भूतमिव पश्यन् प्रबोधसमये स्वात्मानमेवाद्व-
यं साक्षात्कुरुत इति सम्बन्धः। निजमित्यसाधारणं स्वप्रका-
शसदात्मकं स्वस्वरूपमुच्यते। तस्मिन्नन्तर्गतं तत्सत्ताप्रकाश-
व्याप्तं, तस्मिन्नध्यस्तमिति यावत्। विश्वं भूतभौतिकरूपं
विषयजातम्। मायया अनाद्यनिर्वाच्यया स्वावभास्यया
स्वात्मनि कल्पितया। बहिः स्वात्मनः पृथक् इदन्तास्पदत-
या। उद्भूतमिवेतीवशब्दो विद्वद्दृष्ट्या प्रयुक्तो न प्रतीत्यभि-
प्रायेण। वस्तुगत्यानुद्भूतमेवोद्भूतं पश्यन्नित्युक्तं भवति।
इवशब्दार्थं दृश्यस्य मायामयत्वं तत्त्वज्ञाननिवर्त्यत्वेनोपपा-
दयति—प्रबोधेति। प्रबोधसमयः आचार्योपदिष्टमहावा-
क्यार्थसाक्षात्कारसमयः तस्मिन्। स्वात्मानमेव सत्ताप्र-
काशात्मकमेव। एवकारार्थं स्वयमेवाह—अद्वयमिति। द्व-
यशब्दवाच्यविश्वशून्यं प्रविलीनप्रपञ्चं स्वात्मानमसाधारण-
स्वस्वरूपं साक्षात्कुरुते अहमस्म्यद्वयानन्दप्रकाशात्मेति। त-
स्मै इत्यर्थः। स्वात्मनि वस्तुतोऽसतोपि तत्रत्यस्येवावभासे
दृष्टान्तमाह—दर्पणदृश्यमाननगरीतुल्यमिति। विश्वविशे-
षणमेतत्। अनेनात्मनो विश्वाकारपरिणामशङ्का निरस्ता।
बहिरविद्यमानस्यापि बहिरवभासे दृष्टान्तं वदन् प्रबोधनिव-
र्त्यत्वमपि तेनैव द्रढयति—यथा निद्रयेति। यथा कश्चित्
सुप्तो निजान्तर्गतमेव वासनामयं विश्वं निद्रया बहिर्विषय-
त्वेन उद्भूतमिव पश्यन् प्रबोधसमये जाग्रदवस्थागमनसमये
स्वात्मानमेवाद्वयं स्वप्नोपलब्धप्रपञ्चरहितं साक्षात्कुरुते तथे-

त्यर्थः । अत्र विश्वं पश्यन्नद्वयमात्मानं साक्षात्कुरुत इति शतृनिर्देशो न लक्षणार्थः, नापि हेत्वर्थः; किन्तु तिष्ठन्गायतीतिवत् क्रियाद्वयनैरन्तर्यद्योतनार्थः । यद्वा—लक्षणार्थोयं शता; पूर्वं यः स्वसम्बन्धिविश्वदर्शनेन सद्वयः संसारीव लक्षितः स एव प्रबोधसमये विद्याबाधितविश्वः स्वात्मानमेवाद्वयं साक्षात्कुरुत इति द्रष्टव्यम् ॥ १ ॥

अस्यार्थः-

**अन्तरस्मिन्निमे लोका अन्तर्विश्वमिदंजगत् ।**
**बहिर्वन्मायया ऽऽभाति दर्पणे प्रतिबिम्बितम् ॥ ८॥**

उदाहृतं मूलश्लोकं तात्पर्यतो वार्तिकश्लोकैर्व्याख्यातुमारभते—अस्यार्थ इति ॥

तत्र प्रथमपादार्थे श्रुतिमुदाहृत्य व्याचष्टे—अन्तरस्मिन्निति ॥ इमे प्रसिद्धाः प्रत्यक्षादिप्रमाणसिद्धाः लोकाः विश्वशब्दनिर्दिष्टाः अस्मिन् परमात्मनि अन्तर्मध्ये वर्तन्ते, न ततो बहिः स्वतन्त्रतयेत्यर्थः । उक्तमेवार्थं प्रकटयति—अन्तर्विश्वमिदं जगदिति । विश्वं सर्वमेवेदं जगत् अन्तः, नात्र सङ्कोचकारणमित्यर्थः । 'ब्रह्मैव भूतानां ज्येष्ठम् । तेन कोर्हति स्पर्धितुम् । ब्रह्मन्देवास्त्रयस्त्रिꣳशत् । ब्रह्मन्निन्द्रप्रजापती । ब्रह्मन् ह विश्वा भूतानि । नावीवान्तस्समाहिता ।'* इति श्रुतिवाक्यशेषः । इदं विश्वं दर्पणे प्रतिबिम्बितमिव दर्पणान्तर्गतमिवान्तस्स्थमेव विश्वं मायया बहिर्वत् आभातीति योजना॥८॥

**स्वप्ने स्वान्तर्गतं विश्वं यथा पृथगवेक्ष(गिवेक्ष्य)ते ।**
**तथैव जाग्रत्कालेपि प्रपञ्चोयं विविच्यताम् ॥ ९ ॥**

---

* तै. ब्रा. २-८-८.

इदानीं यथा निद्रयेति दृष्टान्तार्थमाह—स्वप्न इति ॥ निगदव्याख्यातं पद्यमेतत् ॥ ९ ॥

**स्वप्ने स्वसत्तैवार्थानां सत्ता नान्येति निश्चिता ।**
**को जाग्रति विशेषोस्ति जडानामाशुनाशिनाम् १०**

स्वप्नदृष्टान्तेनैव सत्तास्फुरणयोः आत्मैकायतनत्वमुक्तमित्याह—स्वप्ने स्वसत्तैवेति ॥ स्वप्ने दृश्यमानार्थानां या सत्ता सा स्वसत्तैवात्मसत्तैव निश्चिता नान्या सामान्यात्मिका कार्यात्मिका वा । तथाहि—न तावत् स्वप्ने बाह्यार्थानुपलभते द्रष्टेति श्लिष्यते, तदुपलम्भकारणानामिन्द्रियाणामुपरतत्वात्, 'स यत्र प्रस्वपित्यस्य लोकस्य सर्वावतो मात्रामपादाय'[1] इति श्रुतेः, स्वप्नदृष्टदेशकालवस्तूनां जाग्रति संवादादर्शनाच्च । तस्मात्स्वप्ने देहनाड्यन्तस्स्थितो न बाह्यार्थान् पश्यति, नापि बहिर्निर्गत्य पश्यति, तथा सति वस्तुदर्शनदेशेपि जागरणप्रसङ्गस्स्यात् । देशान्तरगतं तत्रत्यवस्त्ववलोकिनमात्मानं मन्यमान एव विना प्रत्यागमनं सुप्तदेहदेशेपि प्रबुध्यमान उपलभ्यते । अतो न बहिर्गत्वोपलभ्यत इति । अतस्तु यथाप्रदर्शनयोग्यदेशकालनिमित्तविरहान्न वास्तवं दृश्यमस्ति । तदभावे च न सत्तासामान्यं कार्यं वान्यत् सद्रूपं सम्भाव्यते । 'अथ रथान् रथयोगान् पथः सृजते'[2] इति श्रुतिर्वासनोद्भूतिनिमित्तदर्शनमात्रविषया, औचित्यायोगेन परमार्थत्वानुपपत्तेः । तस्माज्जाग्रद्दर्शनवासनाऽन्तस्स्थैव सती निद्रादोषात् बहिरिवावभासत इति युक्तोऽयं जाग्रद्विषयदर्शनस्य मिथ्यात्वे दृष्टान्तः। तस्मादारोपितस्याधिष्ठानसत्ताव्यतिरेकेण सत्ताऽनिरूपणात् अधिष्ठानभूतात्मसत्तैव स्वप्ने सर्वस्य सत्ता, न पृथ-

---

१ बृ. उ. ६-३-९. २ बृ. उ. ६-३-१०.

गिति सिद्धं दृष्टान्तोक्तमर्थं दार्ष्टान्तिके योजयन्ननुमानं सूचयति—को जाग्रतीति; जाग्रद्दृष्टार्थाः सर्वे आत्मसत्तयैव सत्तावन्तः. तस्मिन्नेवाव्यभिचारेणोपलभ्यमानत्वात् स्वाप्नार्थवत् । तथा विमताः स्वसत्तारहिताः, जडत्वात् स्वाप्नार्थवत् । न चासिद्धौ हेतू; विमताः अन्यसत्तयैव सत्तावन्तः, तथा इमे जडाः, अव्यभिचरितेऽर्थे उपलभ्यमानत्वे सति व्यभिचारित्वात् आशुतरविनाशित्वाद्वा, रज्ज्वां सर्पधारादण्डमालादिवत् स्वप्नार्थवच्चेत्यर्थः ॥ १० ॥

**स्वप्ने प्रकाशो भावानां स्वप्रकाशान्न हीतरः ।**
**जाग्रत्यपि तथैवेति निश्चिन्वन्ति विपश्चितः ॥ ११ ॥**

एवं दृश्यसत्ताया अधिष्ठानपर्यवसायित्वं व्युत्पाद्य तत्स्फुरणस्यापि तत्पर्यवसायित्वं व्युत्पादयति—स्वप्ने प्रकाश इति ॥ 'आत्मनैवायं ज्योतिषास्ते' 'अत्रायं पुरुषस्स्वयं ज्योतिः' इति श्रुतेश्च स्वप्ने भावानां दृश्यानामर्थानां प्रकाशः स्वप्रकाशादधिष्ठानात्मप्रकाशान्न हीतरः स्वतन्त्रः; स्वतस्सत्ताहीनस्य स्वतस्स्फुरणस्याप्यभावादित्यर्थः । अत्राप्यनुमानमाह—जाग्रत्यपीति । विमताः जाग्रद्दृश्याः अन्याधीनप्रकाशाः, अन्यस्मिन् भासमान एव सति भासमानत्वात्, स्वप्नदृश्यवदिति विपश्चितो निश्चिन्वन्तीत्यर्थः । न चाप्रयोजकत्वं शङ्क्यम्, दृश्यानामप्यनन्याधीनप्रकाशत्वे सति इन्द्रियाद्यनपेक्षणात् तत्सृष्टिवैयर्थ्यप्रसङ्गादिति द्रष्टव्यम् ॥ ११ ॥

**निद्रया दर्शितानर्थान्न पश्यति यथोत्थितः ।**
**सम्यग्ज्ञानोदयादूर्ध्वं तथा विश्वं न पश्यति ॥ १२ ॥**

---

१. बृ. उ. ६-३-६, ९.

तदेवं मायावस्थमेव मायिकं विश्वदर्शनं, न विश्वस्यान्यनिरपेक्षसत्तास्फुरणे स्त इति पूर्वार्धव्याख्यानेन प्रतिपाद्येदानीमुत्तरार्धं व्याचक्षाणः आत्मसत्तास्फुरणयोरव्यभिचारान्नित्यत्वं सूचयति—निद्रया दर्शितानिति ॥ (यस्य) सर्वाधिष्ठानस्य प्रत्यगात्मनो ब्रह्मणो याथात्म्यज्ञानोदयादित्यर्थः ॥ १२ ॥

**अनादिमायया सुप्तो यदा जीवः प्रबुध्यते ।**
**अजम्[1]निद्रमस्वप्नमद्वैतं बुध्यते तदा[2] ॥ १३ ॥**

उक्तेऽर्थे वृद्धस्मृतिं संवादयन् अद्वैतसाक्षात्कारोदयप्रकारं सूचयति—अनादीति ॥ 'अनादिमायया सुप्त इति' स्वतो जीवस्य ज्ञानं न सम्भाव्यत इति सूचयति । 'यदा प्रबुध्यते' इत्युक्त्यान्यतोपि प्रबोधस्य दुर्लभत्वं द्योतयति । तथा च श्रुतिः—

'श्रवणायापि बहुभिर्यो न लभ्यः शृण्वन्तोपि बहवो यन्न विद्युः ।
आश्चर्यो वक्ता कुशलोस्य लब्धा आश्चर्यो ज्ञाता कुशलानुशिष्टः[3]'

इति । स्मृतिरपि—'आश्चर्यवत् पश्यति कश्चिदेनम्[4]' इत्यादि । यदैवं जीवः प्रबुध्यते आचार्योपदेशतो वेदान्तवाक्यात् प्रबोधं लभते तदाऽद्वैतमात्मतत्त्वं प्रबुध्यते साक्षात्करोति । किंलक्षणमद्वैतम्? अजम् आगन्तुकप्रबोधवज्जाग्रदवस्थावर्जितम् । अनिद्रं निद्रोपलक्षितमूर्छासुषुप्तिरहितम् । अस्वप्नं स्वप्नाख्यमध्यावस्थाविरहितम् । अत एवावस्थात्रयद्वैतशून्यत्वात् अद्वैतमित्यर्थः ॥ १३ ॥

**श्रुत्याचार्यप्रसादेन योगाभ्यासवशेन च ।**
**ईश्वरानुग्रहेणापि स्वात्मबोधो यदा भवेत् ॥ १४ ॥**

---

१ अजमनिद्रेति. २. गौ. का. १-१६. पा. ३. क. उ. २-७. ४. गीता. २-२९.

उदाहृतस्मृतौ यदातदेत्यनयोरर्थमाह—श्रुत्याचार्येति वार्तिकद्वयेन ॥ आचार्यप्रसादेनानुग्रहेण, असम्भावनारहितस्वार्थया श्रुत्या, योगाभ्यासो निदिध्यासनं तद्वशेन तदनुष्ठानप्रभावेण, ईश्वरःप्राक्सेवितोन्तर्यामी श्रवणादिना चाराध्यमानः परमात्मा, तस्यानुग्रहः। उपासकचित्ते स्वतत्त्वाविष्करणं, तेन। अपिशब्दः उक्तसर्वसाधनसमुच्चयार्थः। तथाच श्रुतयः—'वेदान्तविज्ञानसुनिश्चितार्थाः'[1] 'आचार्यवान् पुरुषो वेद'[2] 'ततस्तु तं पश्यते निष्कलं ध्यायमानः'[3] 'यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा वृणुते तनूं स्वाम्'[4] इति। एतैस्साधनैः यदा सम्पद्यते पुरुषस्तदा प्रबुद्ध्यत इति स्मृत्युक्तयदाशब्दो व्याख्यातः ॥ १४ ॥

**भुक्तं यथान्नं कुक्षिस्थं स्वात्मत्वेनैव पश्यति ।**
**पूर्णाहन्ताकवलितं विश्वं योगीश्वरस्तथा ॥ १५ ॥**

तदाशब्दार्थमद्वैतबोधं विवृणोति—भुक्तमिति ॥ स्फुटार्थमेतत्। अनेन 'जानीयात्तत् कथं जीवः'[6] इति प्रश्नस्याद्वैतप्रत्यगात्मरूपेण जानीयादित्युत्तरमुक्तं वेदितव्यम्। श्रुत्याचार्येतिपूर्वश्लोकेन 'किन्तत् ज्ञानस्य साधनम्'[6] इत्यस्योत्तरमुक्तं द्रष्टव्यम्। अस्य ज्ञानस्य फलं तृतीयश्लोकेन संसारनिवृत्तिलक्षणं वक्ष्यति ॥ १५ ॥

**यथा स्वप्ने नृपो भूत्वा भुक्त्वा भोगान्यथेप्सितान्।**
**चतुरङ्गबलोपेतःशत्रुं जित्वा रणाङ्गणे ॥ १६ ॥**

एवं श्लोकस्य पदशः प्राप्तमर्थमाविष्कृत्यार्थिकमर्थमाविष्कुर्वन् 'ईश्वरत्वं च जीवत्वम्' इत्याद्यवशिष्टप्रश्नानामुत्तर

---

१. तै. उ. ४-१२. । २. छा. उ. ६-१४-२. । ३. मु- उ. ३-१-१८. ।४. मु उ. ३-२-३ ५.—योगे.

माह—यथा स्वप्न इत्यादिना ॥ चिदात्मनो जीवेश्वरभावो मायानिबन्धन इत्यत्र दृष्टान्त उच्यते—स्वप्ने कश्चिद्यथा नृपात्मतामात्मनोनुभूय स्वातन्त्र्यं मन्यते तद्वत् परान् स्ववशीकृत्य जगत्पतितया स्वातन्त्र्यावस्थापत्तिश्चिदात्मन ईश्वरत्वमित्यर्थः ॥ १६ ॥

पश्चात्पराजितो भूत्वा वनं प्राप्य तपश्चरन् ।
मुहूर्तमात्रमात्मानं मन्यते कल्पजीविनम् ॥ १७ ॥

जीवत्वे दृष्टान्तमाह—पश्चादिति ॥ परतन्त्रोप्राप्तार्थाभिलाषो जीव इत्यर्थः ॥ १७ ॥

तथैव जाग्रत्कालेपि मनोराज्यं करोत्यसौ ।
कालनद्योघवेगेन क्षीणमायुर्न पश्यति ॥ १८ ॥

यथा स्वप्ने जीवभावः तथा जाग्रद्दशायामपि अस्ति दृष्टान्त इत्याह—तथैवेति ॥ १८ ॥

मेघच्छन्नोंशुमालीव मायया मोहितोधिकम् ।
किञ्चित्कर्ता च किञ्चिज्ज्ञो लक्ष्यते परमेश्वरः॥१९॥

आयुःक्षयादर्शनमस्याज्ञत्वमीश्वरवैपरीत्यमुक्तम्, ईश्वर एव सन् मायापरवशतया जीवो भवति, न जीवो नाम कश्चित्स्वतन्त्रोस्तीत्येतद्दृष्टान्तेनोपपादयति—मेघच्छन्न इति ॥ १९ ॥

यद्यत्करोति जानाति तस्मिंस्तस्मिन्परेश्वरः ।
राजा विद्वान् स्वसामर्थ्यादीश्वरोयमितीर्यते ॥२०॥

स्वप्नमनोरथस्य जीवदृष्टान्तस्य दार्ष्टान्तिकमुक्त्वा स्वप्नेश्वरदृष्टान्तस्य दार्ष्टान्तिकमाह—यद्यत्करोतीति ॥ यो यद्यत्

स्वसामर्थ्यात् स्वातन्त्र्येण करोति तस्मिंस्तस्मिन् क्रियमाणे परेश्वरः परमेश्वरो राजा, तथा स्वसामर्थ्याद्यद्यज्जानाति तस्मिंस्तस्मिन् स विद्वान् स्वतन्त्रज्ञानवानीश्वरोयमितीर्यते इति योजना ॥ २० ॥

**ज्ञानक्रिये शिवेनैक्यात्सङ्क्रान्ते सर्वजन्तुषु ।**
**ईश्वरत्वं च जीवानां सिद्धं तच्छक्तिसङ्गमात् ॥२१॥**

मायिकमीश्वरत्वं जीवत्वमन्यसापेक्षं व्युत्पाद्य सर्वात्मत्वं चिदात्मनो व्युत्पादयन् 'सर्वात्मत्वं च कीदृशम्' इत्यस्य प्रश्नस्योत्तरमाह—ज्ञानक्रिये इति ॥ सर्वजन्तुषु ये ज्ञानक्रिये ज्ञातृत्वं कर्तृत्वं च ते स्वातन्त्र्येण ज्ञातृकर्तृशिवेनैक्यात्तेषु सङ्क्रान्ते, अग्न्यैक्यादिवायःपिण्डे दग्धृत्वम् । अतः ईश्वरशक्तियोगात् जीवानामीश्वरत्वं सिद्धम् । ईश्वर एव सर्वात्मेति सिद्धं तस्य सर्वात्मत्वमित्यर्थः ॥ २१ ॥

**अयं घटोयं पट इत्येवं नानाप्रतीतिषु ।**
**अर्कप्रभेव ज्ञानं तत्स्वयमेव प्रकाशते ॥ २२ ॥**

सर्वजन्तुष्वविशिष्टं यत् ज्ञानं तस्य स्वप्रकाशत्वमेकत्वं च साधयति—अयमिति ॥ स्वज्ञानं स्वस्य द्रष्टुः स्वरूपभूतं ज्ञानं स्वयमेव प्रकाशते स्फुरतीत्यर्थः ॥ २२ ॥

**ज्ञानं न चेत्स्वयं सिद्धं जगदन्धं तमो भवेत् ।**
**न चेदस्य क्रिया काचित् व्यवहारः कथं भवेत् ॥२३**

ज्ञानस्यास्वप्रकाशत्वाभ्युपगमे बाधकमाह—ज्ञानं न चेदिति ॥ भवत्वेवं ज्ञानमीश्वरस्य, तस्यामूर्तस्य कुतः क्रियेत्यत आह—न चेदिति । ईश्वरः कर्तेति व्यवहारसिद्धये क्रियापि यादृशी तादृश्यस्याङ्गीकार्येत्यर्थः ॥ २२ ॥

क्रिया नाम परिस्पन्दपरिणामस्वरूपिणी ।
स्पन्दमाने बहिर्ज्ञाने तदङ्कुरवदुद्भवेत् ॥ २४ ॥

तर्हि किंस्वरूपा क्रियेत्यपेक्षायामाह—क्रिया नामेति ॥ परिस्पन्दश्चलनं, परिणामोवस्थान्तरापत्तिः । एवंस्वरूपिणी क्रिया प्रसिद्धा शरसुवर्णादिष्वित्यर्थः । सा अमूर्तेष्वप्युपाधिवशात् भातीत्याह—स्पन्दमान इति । इन्द्रियद्वारकमनोवृत्तिद्वारा ज्ञाने बहिः स्पन्दमाने तदङ्कुरवत्तस्य ज्ञानस्याङ्कुरवत् कार्यमिव पूर्वोक्ता क्रियोद्भवेत्, ज्ञानव्याप्तेर्थे अतिशयहेतुक्रिया ज्ञानाश्रयायत्तप्राणाधिष्ठितस्थूलोपाधिनिबन्धना भवेदित्यर्थः । अन्तर्यामीश्वरसन्निधानायत्तत्वात् प्राणादिचेष्टायाः, सर्वजन्तुषु प्रतीयमाना चेष्टापीश्वरस्यैवेत्यर्थः ॥ २४ ॥

उत्पाद्यप्राप्यसंस्कार्यविकार्योपाश्रया क्रिया ।
करोति गच्छत्युन्मार्ष्टि छिनत्तीति प्रतीयते ॥२५॥

इदानीं क्रियाकार्यं दर्शयन् क्रियासद्भावं साधयति—उत्पाद्येति ॥ यद्वा—परिस्पन्दरूपां क्रियामुक्त्वा परिणामरूपामुदाहरति—उत्पाद्येति ॥ उत्पाद्यादीनां यथासङ्ख्यमुदाहरणं—करोतीत्यादि । उन्मार्ष्टि मार्जनेन संस्करोतीत्यर्थः । इति कर्मकारकव्यपाश्रया परिणामक्रिया प्रतीयत इत्यर्थः ॥ २५ ॥

शिवो ब्रह्मादिदेहेषु सर्वज्ञ इति भासते ।
देवतिर्यङ्मनुष्येषु किञ्चिज्ज्ञस्तारतम्यतः ॥ २६ ॥

इदानीं सर्वज्ञत्वकिंचिज्ज्ञत्वे एकस्मिन्नप्युपाधिभेदेनाप्यवतिष्ठेते इत्युपपादति—शिव इति ॥ २६ ॥

जरायुजोण्डजश्चैव स्वेदजः पुनरुद्भिदः ।
एते चतुर्विधा देहाः क्रमशो न्यूनवृत्तयः ॥ २७ ॥

तारतम्यत इत्युक्तं; किङ्कृतं जीवेषु तारतम्यमित्यपेक्षायां तत्तच्छरीरोपाधिकृतं तदित्याह—जरायुज इति ॥ अत्रापि 'पुरुषत्वेवाविस्तराम्[1]' इति श्रुतेर्जरायुजेष्वपि ज्ञानादितारतम्यं द्रष्टव्यम् ॥ २७ ॥

ब्रह्मादिस्तम्बपर्यन्ता स्वप्नकल्पैव कल्पना ।
साक्षात्कृतेनवच्छिन्ने प्रकाशे परमात्मनि ॥ २८ ॥

ईश्वरत्वादेर्मायामयत्वमुपपादितमुपसंहरति—ब्रह्मादीति ॥ अनवच्छिन्नप्रकाशे परमात्मनि साक्षात्कृते सति सर्वकल्पना जाग्रति प्रबोधे विलीयमानस्वप्नवत् सहसैव विलीयमानत्वात् स्वप्नतुल्यैवेत्यर्थः ॥ २८ ॥

अणोरणीयान्महतो महीयानिति वेदवाक् ।
रुद्रोपनिषदप्येवं स्तौति सर्वात्मकं शिवम् ॥२९॥

उक्ते सर्वात्मत्वे प्रमाणमाह—अणोरणीयानिति ॥२९॥

ईश्वरो गुरुरात्मेति मूर्तिभेदविभागिने[(1)] ।
व्योमवद्व्याप्तदेहाय दक्षिणामूर्तये नमः ॥ ३० ॥

गुरुमूर्तये दक्षिणामूर्तय इति पदद्वयस्यार्थमाह—ईश्वर इति ॥ इदं नम इत्यस्यात्मसमर्पणं प्रह्वीभावं विवक्षन् 'आत्मेति मूर्तिभेदे' इत्युवाच । तथा चेश्वरो गुरुरात्मेत्येवं मूर्तिभेदभिन्नाय दक्षिणामूर्तये नम इत्यर्थः । मूर्तित्रयकृतप-

---

1 ऐत. ण्य. २. ३. २. ५। (1) मूर्तिभेदाद्विभेति—मूर्तित्रयविभेति च पाठान्तरम् ।

रिच्छेदशङ्काव्यावृत्तये व्योमवद्व्याप्तदेहायेति विशेषणं, व्यापकायेत्यर्थः ॥ ३० ॥

**इति श्रीदक्षिणामूर्तिस्तोत्रार्थप्रतिपादके ।**
**प्रबन्धे मानसोल्लासे प्रथमोल्लाससंग्रहः ॥ ३१ ॥**

प्रथमश्लोकव्याख्यामुपसंहरति—इतीति ॥ ३१ ॥

इति श्रीमानसोल्लासवृतान्ते प्रथमोल्लासः समाप्तः ॥ १ ॥

---

**उपादानं प्रपञ्चस्य संयुक्ताः परमाणवः ।**
**मृदन्वितो घटस्तस्माद्भासते नेश्वरान्वितः ॥ १ ॥**

मायया बहिरिवोद्भूतं स्वान्तर्गतं विश्वं पश्यन्निति विश्वस्यात्मनि मायाध्यस्तत्वमुक्तं; तन्नोपपद्यते, विश्वस्यात्मन्यसत्योपादानकत्वादितिवादिनः केचित्प्रत्यवतिष्ठन्ते; तेषांमतमुत्तरश्लोकेन निराकर्तुमुपन्यस्यति—उपादानमित्यादिना ॥ अत्र वैशेषिका मन्यन्ते—प्रपञ्चस्य कार्यद्रव्यात्मकस्य परस्परं संयुक्ताः परमाणवो निरवयवाः परमसूक्ष्मद्रव्यविशेषाः उपादानम् आश्रयविशेषाः । तद्गतगुणविशेषाश्च तदुपादानकाः । कर्मापि मूर्तद्रव्यसमवेतत्वात्तदुपादानकमेव । नित्यद्रव्यगुणजातिविशेषसमवायास्तु नित्या एवेति न तेषां कारणापेक्षा । एतदतिरिक्तं च भावरूपं न किंचिदस्ति, अभावश्च भावप्रयोगिको न स्वतन्त्र इति । नेश्वरोपादानकः प्रपञ्चः, नापि मायामय इति, प्रपञ्चस्य ईश्वरानुपादानत्वं साधयन्ति—मृदन्वित इति । अयमर्थः—विमताः, अचेतनोपादानकाः अचेतनान्विततया भासमानत्वात्; यः स्वसत्तायां यदन्वितो नियमेन भासते स तदुपादानको दृष्टः, यथा मृदन्वि-

ततयावभासमानो घटो मृदुपादानकः, तथा चेमे, तस्मात्त-थेति । तस्मादीश्वरान्विततया कस्याप्यवभासादर्शनात् नेश्वरोपादानकः प्रपञ्च इत्यर्थः ॥ १ ॥

**परमाणुगता एव गुणा रूपरसादयः ।**
**कार्ये समानजातीयमारभन्ते गुणान्तरम् ॥ २ ॥**

कारणगतगुणविशेषैरेव कार्यगुणोत्पत्तेः तत्रापि नेश्वरः कार्यहेतुरित्याह—परमाणुगता इति ॥ समानजातीयमिति विशेषगुणाभिप्रायम्, द्व्यणुकादिपरिमाणस्य परमाण्वादिगतसङ्ख्यायोनित्वाङ्गीकारात्, परत्वापरत्वयोर्दिक्कालपिण्डसंयोगयोनित्वाङ्गीकाराच्च ॥ २ ॥

**कार्यं यत्र समन्वेति कारणं समवायि तत् ।**
**चक्राद्यं साधनं यत्तु घटस्यासमवायि तत् ॥ ३ ॥**

भावकार्याणां कारणं त्रिविधं प्रसिद्धं, समवायिकारणं निमित्तकारणमसमवायिकारणं चेति । तेषु त्रिविधेष्वपि कारणेष्वीश्वरस्य कर्तृतारूपनिमित्तविशेषत्वमन्तरेणान्यः कारणत्वप्रकारो नास्तीति कथयितुं कारणभेदानां लक्षणान्याह—कार्यं यत्रेति ॥ यस्मिन् समवायसम्बद्धं कार्यं जायते तत्समवायिकारणं, तदेवोपादानशब्दवाच्यं चेत्यर्थः । यत्पुनः समवायेतरसम्बन्धसम्बद्धं कार्योत्पत्तिकारणं तन्निमित्तमिति विवक्षित्वा उदाहरति—चक्राद्यमिति । न समवायि तदसमवायि, निमित्तमित्यर्थः ॥ ३ ॥

**समवायिनि तिष्ठेद्यत् समवाय्याश्रये तथा ।**
**कार्येऽवधृतसामर्थ्यं कल्प्यतेऽसमवायि तत् ॥ ४ ॥**

असमवायिकारणंलक्षयति—समवायिनीति ॥ स्वका-

यस्य समवायो यस्मिन् तत्समवायि, तस्मिन्यत् तिष्ठेत्, यथा—तन्तुसंयोगः पटसमवायिकारणेषु तन्तुष्वित्यर्थः । अनेन कार्यैकार्थसमवायलक्षणा प्रत्यासत्तिरुक्ता । तथा समवाय्याश्रये यत्तिष्ठेदिति योजना । स्वकार्यसमवायिकारणस्याश्रये इत्यर्थः । अनेन कारणैकार्थसमवायरूपा प्रत्यासत्तिरुक्ता । यथा—तन्तुगता रूपादयः पटगतरूपाश्रयेण सहैकार्थसमाश्रया इत्यस्योदाहरणम् । अन्यथासिद्धतन्तुत्वादौ प्रसङ्गवारणायाह—कार्य इति । अवधृतसामर्थ्यमनन्यथासिद्धमित्यर्थः ॥ ४ ॥

## निमित्तं कारणं तेषामीश्वरश्च कुलालवत् ।

एवं कारणत्रयं कार्यापेक्षितं स्वरूपतो निर्दिश्य तत्रेश्वरस्यापि सर्वकार्योत्पत्तिनिमित्तकारणत्वमेष्टव्यमिति तत्सद्भावं साधयति—निमित्तमिति ॥ अन्येषु निमित्तेषु सत्स्वपीश्वरोपि निमित्तं तेषां सर्वेषां कार्याणां चाङ्गीकार्यम्, चेतनेनाधिष्ठात्रा विना अचेतनप्रवृत्तेरयोगात् ; यथा—चक्रादिषु कारणान्तरेषु सत्स्वपि कुलालादिना विना घटादिकार्यानुत्पत्तिरित्यक्षरार्थः । विमतं, चेतनाधिष्ठिताचेतनकारणकं, कार्यत्वात्, घटादिवदित्युक्तं भवति ॥

## यत्कार्यं जायते यस्मात्तस्मिन् तत्प्रतितिष्ठति ॥५॥
## मृत्तिकायां घटस्तन्तौ पटस्स्वर्णेऽङ्गुलीयकम् ।

यस्मादेवं युक्तियुक्ता कल्पना, तस्माच्चेतनस्य जगदुपादानत्वं सर्वात्मत्वमिति कल्पनं व्यापकोपलब्धिविरुद्धमित्युपसंहरति—यत्कार्यमिति ॥ यस्मादुपादानाद्यत् कार्यं जायते तत्तस्मिन् प्रतितिष्ठति ॥ ५ ॥ यथा—मृत्तिकायां घट इत्यु-

दाहरणम् । तथा च सर्वस्य कार्यस्याचेतनप्रतिष्ठत्वोपलम्भविरुद्धं चेतनोपादानकत्वकल्पनमित्यर्थः ॥

**इति वैशेषिकाः प्राहुस्तथा नैयायिका अपि ॥ ६ ॥**

केषामियं कल्पनेत्यपेक्षायामाह—इति वैशेषिका इति ॥ ६ ॥

**रजस्सत्त्वं तमश्चेति प्रधानस्य गुणास्त्रयः ।**

इदानीं साङ्ख्यकल्पनामाह—रज इत्यादिना ॥ प्रधानं प्रकृतिः 'माया प्रधानमव्यक्तम्'[1] इत्यत्र वक्ष्यमाणलक्षणम् । तस्य प्रधानस्य रजस्सत्त्वं तमश्चेति त्रयो गुणाः । 'त्रिगुणमविवेकिविषयः'[2] इत्यादौ साङ्ख्यशास्त्रे निर्दिष्टं प्रधानस्य गुणत्रयात्मकत्वमित्यर्थः ॥

**रजो रक्तं चलं तेषु सत्त्वं शुक्लं प्रकाशकम् ॥ ७ ॥**
**तमः कृष्णं चावरकं सृष्टिस्थित्यन्तहेतवः ।**

तत्रोक्तमेव गुणानां लक्षणमाह—रजो रक्तमिति ॥ तेषु गुणेषु मध्ये रक्तं रञ्जनात्मकम् । उपष्टम्भकमिति यावत् । तथा चलं चलनस्वभावं यत्तद्रजोगुणमित्यर्थः । एवमुत्तरत्रापि योजना । शुक्लं शुद्धं लघु प्रकाशकं सर्वार्थसाधकं सत्त्वम् ॥ ७ ॥ तमः कृष्णं गुरुत्वोपेतं मलिनस्वभावं चावरकम् । अविवेककरमित्यर्थः । एषां सद्भावं साधयति—सृष्टिस्थित्यन्तहेतव इति । रजोगुणः सृष्टिहेतुः, सत्त्वं स्थितिहेतुः, तमः प्रलयहेतुरिति योजना । कथमेषां सृष्ट्यादिहेतुत्वम्? इत्यस्योत्तरमुत्तरत्र भविष्यति ॥

**इति साङ्ख्याश्च भाषन्ते तेषां दूषणमुच्यते ॥ ८ ॥**

अस्मिन्मते निमित्तत्वेनापि न चेतनापेक्षा जगत इत्यु-

---

१ मा. २-३१. २. साङ्ख्यसप्ततौ. ११.

पसंहरति—इति साङ्ख्याश्च भाषन्त इति ॥ चकारादन्येपि ये स्वभाववादिनः,शून्यवादिनः, शैवाः, यौगाः, पौराणिकाश्च ते । गृह्यन्ते । तेषां सर्वेषां दूषणमुच्यत इत्युत्तरश्लोकोत्थापनमेतत् ॥ ८ ॥

"बीजस्यान्तरिवाङ्कुरो जगदिदं प्राङ्निर्विकल्पं पुन
र्मायाकल्पितदेशकालकलनावैचित्र्यचित्रीकृतम् ।
मायावीव विजृम्भयत्यपि महायोगीव यस्स्वेच्छया
तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये॥२॥"

अत्र 'सदेव सौम्येदमग्र आसीदेकमेवाद्वितीयम्'[1] 'आत्मा वा इदमेक एवाग्र आसीन्नान्यत्किञ्चन मिषत्'[2] इत्यादिश्रुतिमाश्रित्य जगत्कारणत्वमस्मिन् पद्ये निरूप्यते। अतः स्वबुद्धिमात्रोत्प्रेक्षितं मतान्तरं श्रुतिविरुद्धमित्यभिप्रायः । अस्यैषाऽक्षरयोजना—इदं जगत्प्रागुत्पत्तेः पूर्वं निर्विकल्पं जातिगुणक्रियादिविकल्परहितं सन्मात्रमासीदिति शेषः । सन्मात्रं च ब्रह्मेति पूर्वमुपपादितम् । तत्र दृष्टान्तमाह—बीजस्यान्तरिवाङ्कुर इति। न हि बीजावस्थायां तस्मिन्नविद्यमानोङ्कुरोनेकसहकारिसन्निधानानन्तरं जायत इतीष्यते, कुटजबीजादपि वटाङ्कुरोत्पत्तिप्रसङ्गात् ॥ तस्य तत्रासामर्थ्यान्न प्रसङ्ग इति चेत्, कुतोऽसामर्थ्यमवगतम्? कुटजबीजाद्वटाङ्कुरोत्पत्त्यदर्शनादिति चेत्—तर्हि वटबीजादपि वटाङ्कुरोत्पत्त्यदर्शनात् तस्यापि तत्र कुतः सामर्थ्यमवगम्येत? तदन्वयव्यतिरेकाभ्यां तदवगम इति चेत्—तर्हि वटाङ्कुरजननात्प्राङ्नियमेना-

१ छा. उ. ६-१ । २ ऐ. उ-१-१ ।

न्वितानामनन्यथासिद्धानां सर्वेषामेव भावानां तदुपादानत्वप्रसङ्गः ॥ तत्र—यदन्वितं कार्यं सदा दृश्यते तदुपादानम्, इतरदुत्पत्तिमात्रे निमित्तमिति नातिप्रसङ्ग इति चेत्—एवं तर्हि बीजान्वितस्याङ्कुरस्य क्वाप्यदर्शनात् न बीजमुपादानं सिद्ध्यति ॥ बीजावयवानामेवोपादानत्वं न बीजावयविनः इति चेत्—ते किमङ्कुरावयवेभ्योन्ये, त एव वा?। आद्ये न तेषामङ्कुरे अनुगतिः।द्वितीये त्वस्मन्मतापत्तिः,बीजावयवानामेव बीजसंस्थानपरित्यागेनाङ्कुरात्मतापत्तिरिति अस्माभिरङ्गीक्रियते। अतः सर्वेपि संस्थानविशेषाः कार्यशब्दवाच्याः सर्वानुगतावयवात्मना स्थिता एव तत्रतत्र सहकारिविशेषेणाविर्भावतिरोभाववत्तया विभाव्यन्त इत्यनिच्छद्भिरपि अच्छमतिभिरङ्गीकार्यम् । तथा च सर्वेषु विशेषेषु कार्यकारणभावाद्यात्मना विभाव्यमानेषु, इदम् अयं तदित्याद्युल्लेखयोग्यं यदव्यभिचारि सन्मात्रमनुगम्यमानमस्ति तदेव सर्वस्योपादानं; तच्च ब्रह्मैव नान्यदिति बीज इवाङ्कुरो जगदिदं स्वान्तर्गतं यो विजृम्भयति तस्मै नम इत्यन्वयः ॥ तर्हि यथा बीजस्याङ्कुरजनने सलिलधामतेजआद्यनेकसहकार्यपेक्षा दृष्टा, तथास्य ब्रह्मणो जगज्जनने किमस्ति, उत नास्ति? अस्ति चेत्—'एकमेवाद्वितीयं'[1] 'नान्यत् किञ्चन मिषत्'[2] इति श्रुतिविरोधः। नास्ति चेत्—दृष्टविरोध इत्यत आह—पुनरिति। पुनः सृष्टिकाले प्राप्ते मायया 'देवात्मशक्तिं स्वगुणैर्निगूढाम्'[3] इत्यादिश्रुतौ ब्रह्मणः शक्तित्वेन निर्दिष्टतया कल्पिता ये देशाः कालाश्च । उपलक्षणमेतत् तत्तत्कार्यसाधनानामपि। तेषां कलना सम्बन्धविशेषः, तस्माद्वैचित्र्यं तेन चित्रीकृतं विविधविशेषावस्थापन्नमित्यर्थः ॥ एतेन ब्रह्मणः कारणत्वस्य

१ छा. उ-६-१. २ ऐ. उ-१-१.

मायामयत्वोपपादनादारम्भवादः, परिणामवादः, स्वभाववादश्च निराकृतः ॥ शून्यवादश्च सद्रूपोपादानत्वाङ्गीकारादेव निरस्तो वेदितव्यः॥ ननु कार्यस्यापि मायाकल्पितत्वे प्रागिति च पुनरिति च कथं निर्देश इति चेत्—नैष दोषः, परप्रत्यायनार्थतया यथाव्यवहारं प्राप्तानुवादमात्रत्वात् । एवं सति न श्रुतिविरोधो नापि दृष्टविरोधः; परमार्थस्य सहकारिणोऽनङ्गीकारादिति सर्वमनवद्यम् । मायासहकारितस्य कारणत्वं क्वोपलब्धमित्यत उदाहरणमाह—मायावीवेति । मायावी लोकप्रसिद्ध ऐन्द्रजालिकः । स यथा मणिमन्त्रादिप्रयोगसङ्क्षुभ्यमाणमायामात्रसहायो रथगजतुरगाद्यनेकं जगत्सृजति तथायमीश्वर इत्यर्थः । दृष्टान्तान्तरमाह—अपि महायोगीव यस्स्वेच्छयेति । अपिः दृष्टान्तयोर्मिथस्समुच्चयार्थः । बाह्यसहकारिसाधनहीनास्सङ्कल्पमात्रसहकारिणो यथा योगिनः विश्वामित्रादयो विचित्रं जगद्भोगक्षममारचितवन्त इति पुराणादिषु प्रसिद्धं; तथैवेक्षणमात्रेण स्वेच्छापरपर्यायेण भगवानपि विचित्रं जगत्सृजेदिति नात्रासम्भावना कार्येत्यर्थः ॥ २ ॥

अस्यायमभिप्रायः—

अङ्कुरादिफलान्तेषु कार्येष्वस्तित्वमिष्यते ।
कुत आगत्य सम्बद्धा वटबीजेषु ते कणाः॥ ९ ॥

श्लोकव्याख्यां प्रतिजानीते—अस्यायमभिप्राय इति ॥

यदुक्तमणुकारणं जगदिति तद्व्यापकविरुद्धोपलब्धिपराहतमिति उपपादयति—अङ्कुरादीति ॥ कार्येषु सर्वेष्वन्वि-

ततया उपलभ्यमानस्योपादानत्वमिति स्थितौ, सर्वत्र सत्तामात्रस्यान्वयदर्शनात्, परमाण्वादेस्तददर्शनात्, सच्छब्दवाच्यं ब्रह्मोपादानं, नाण्वादय इति वार्तिकश्लोकतात्पर्यार्थः। पूर्वार्धाक्षरार्थस्तु स्पष्ट एव। वटबीजेषु चरमकार्यभूतेषु ते कणाः परमाणुलक्षणाः कुत आगत्य सम्बद्धाः? तेषां द्व्यणुकमात्रेऽन्वयसम्भवेपि सर्वकार्याननन्वयात् न ते उपादानमित्यर्थः। द्व्यणुकादीनांतु त्र्यणुकाद्यन्वयित्वे नास्ति प्रमाणम्। तथा सति पिण्डान्वितो घट उपलभ्येत, शकलेषु घटः, कपालेषु वा पिण्डः। नैतदस्ति; पूर्वावस्थाविनाशमन्तरेणोत्तरावस्थाप्राप्त्ययोगात्, नष्टस्य चानुपादानत्वात्। नश्यत्पूर्वावस्थावयवानाम् उत्तरावस्थोपादानत्वे चरमकार्यस्यापि परमाणव एवोपादानमिति प्रसज्येत। तेषां चातीन्द्रियत्वात् तदाश्रितं कार्यमप्रत्यक्षं स्यात्। तस्मात् सर्वकार्यान्वयिन उपादानत्वम्, तच्च सन्मात्रं ब्रह्मैवेत्युत्तरार्धतात्पर्यार्थः॥ ननु कार्यार्थिना यदुपादीयते मुख्यतया तदुपादनं प्रसिद्धं, तच्च बीजाद्येव, न ब्रह्मसत्ता, तत्कथं तस्योपादानत्वमिति चेत्—तुल्यमेतत् परमाणुवादेपि। न ह्यतीन्द्रियाः परमाणवः कार्यार्थिभिरुपादीयन्ते, विकार्यन्ते वा, किन्तु बीजाद्येवेति॥ ननु तदारब्धोवयवी बीजमुपादीयत इति चेत्—तर्हीहापि सद्विवर्त्तो बीजमुपादीयत इति तुल्यम्। ततस्तु बीजेप्यन्वयदर्शनमस्ति न परमाणूनाम्, इत्यस्त्यधिका युक्तिरित्यलं विस्तरेण॥ ९॥

**कारणान्तर्गतं कार्यमिति सर्वैश्च सम्मतम्।**
**तस्मात्सत्ता स्फुरत्ता च सर्वत्राप्यनुवर्तते॥ १०॥**

उक्तमेव स्पष्टयति—कारणान्तर्गतमिति॥ उपादाना-

न्तर्गतमित्यर्थः। प्रकाशमाना सत्ता सर्वत्र कार्यमात्रेनुवर्तत इति सैवोपादानं सिद्धमित्यर्थः ॥ १० ॥

पुष्पे फलत्वमापन्ने क्षीरे च दधितां गते।
विजातीयाः प्रवर्तन्ते गुणा रूपरसादयः ॥ ११ ॥

पूर्वपूर्वकार्यस्योत्तरोत्तरोपादानत्वे बाधकमाह—पुष्पे फलत्वमिति ॥ उपादानगतगुणाः कार्ये समानजातीयं गुणान्तरमारभन्त इति सम्मतम्। तदिह पुष्पफलयोः क्षीरदध्नोश्चोपादानोपादेयभावे समानस्वभावा एवोभयत्र गुणास्स्युः; न च तथा दृश्यन्ते। तस्मात् पूर्वापरभावेपि न पूर्वं कार्यमुत्तरकार्योपादानमित्यर्थः ॥ ११ ॥

कारणं कार्यमंशोंशी जातिव्यक्ती गुणी गुणः।
क्रिया क्रियावानित्याद्याः प्रकाशस्यैव कल्पनाः१२

ननु प्रकाशसन्मात्रस्याकाशवदमूर्तस्य कथं कार्यारम्भकत्वमिति चेत्। न कथञ्चिदिति ब्रूमः ॥ कथं तर्हि कारणत्वाभ्युपगम इति चेत्। सर्वकल्पनारूपविवर्ताधिष्ठानत्वेन रज्ज्वा इव सर्पधारादिकारणत्वमित्याह—कारणं कार्यमिति ॥ बीजं कारणम्, अङ्कुरः कार्यं, पटोंशी, तन्तवोंशाः, गोत्वादिर्जातिः, सास्नादिमल्लक्षणाः पिण्डा व्यक्तयः, पटादिर्गुणी, रूपादिर्गुणः, चलनं क्रिया, तदाश्रयत्वेनाभिमतः क्रियावान् बाणचक्रादिः, आदिशब्दाद्विशेषो, विशेषी, समवायः, समवायी, विशेषणं, विशेष्यं, सदृशः, सादृश्यमित्यादि गृह्यते। एताः कल्पनीः व्यवहाराः प्रकाशस्यैव सन्मात्रस्फुरणस्यैव विवर्तरूपा इत्यर्थः। आरम्भवादे वा, परिणामवादे वा, परमार्थतः कार्यकारणभावनिरूपणासम्भवात्,

वादान्तरस्यातितुच्छत्वात् स्वप्रकाशचिद्रूपे चिदात्मनि माया-विजृम्भितं जगदित्यभिप्रायः ॥ १२ ॥

**चैतन्यं परमाणूनां प्रधानस्यापि नेष्यते ।**
**ज्ञानक्रिये जगत्क्लृप्तौ दृश्येते चेतनाश्रये ॥ १३ ॥**

नन्वेवमपि परमाणवो वा प्रधानं वा सचेतनं भविष्यति 'स एषोणिमैतदात्म्यमिदं सर्वं'[1] 'तम आसीत्तमसा गूढम्'[2] इति च श्रुत्योः परमाणुप्रधानयोः सर्वकारणत्वावगमादिति चेत्तत्राह—चैतन्यमिति ॥ नेष्यते वैशेषिकैः, साङ्ख्यैश्चेति शेषः । न युज्यते च; यतो जगत्कारणे ईक्षणपूर्विका सृष्टिः श्रुतौ श्रूयते 'तदैक्षत'[3] इति । न च तत्तटस्थेश्वरस्य कर्तुः निमित्तभूतस्येति युक्तम् 'बहुस्यां प्रजायेय'[3] इत्यात्मन एव बहुभवनाशंसनश्रवणात् । एतेन च प्रधानपरमाण्वोरनात्मत्वाङ्गीकारादेवानुपपन्नमिति उदाहृते श्रुती न तद्विषये इति ॥ ननु तवेश्वरः कूटस्थोभिमतः, तस्य कथं ज्ञातृत्वकर्तृत्वे स्यातामित्याशङ्क्य, ते अपि तस्यैव मायाशक्तियोगात् स्यातां नान्यस्येत्यभिप्रेत्याह—ज्ञानक्रिये इति ॥ अचेतने क्वाप्यनयोरदर्शनात्, चेतने कुलालादौ दर्शनात् जगत्क्लृप्तावपि ते चेतनाश्रये एवाङ्गीकार्ये इत्यर्थः । तथाच जगत्कारणस्येश्वरस्य कार्यकारणोपाध्यावेशात् कुलालजीवस्येव कार्यकारणतत्संस्कारात्मकमायोपाध्यावेशात् ज्ञानक्रिये शक्ती भविष्यत इत्युक्तम् । तथाच वैयासिकन्यायसूत्रं—'यथा च तक्षोभयथा'[4] इति ॥ १३ ॥

**कालरूपक्रियाशक्त्या क्षीरात्परिणमेद्दधि ।**
**ज्ञातृज्ञानज्ञेयरूपं ज्ञानशक्त्या भवेज्जगत् ॥ १४ ॥**

---

१. छा-उ.६-७। २. ऋग्वे-१०। ३. छा-उ-६-२। ४. ब्र-सू-२-३-४०।

ननु चेतननिरपेक्षमपि कार्यं जायमानं दृश्यते, यथा दुग्धं स्वयमेव दध्यात्मना परिणमत इति साङ्ख्यशङ्कामपाकरोति—कालरूपेति ॥ 'यः सर्वेषु भूतेषु तिष्ठन्' इति श्रुतेः[1] सर्वगतस्यान्तर्यामिण ईश्वरस्य या कालाख्या क्रियाशक्तिस्तदधिष्ठितात् क्षीरात् दध्यात्मना परिणामः; न क्षीरस्वभावात् तथा सति सदा परिणामप्रसङ्ग इत्यर्थः। एतेन कालोपीश्वरस्यैव शक्त्याकारभेद इति सूचितम्। तथा च श्रूयते—'परास्य शक्तिर्विविधैव श्रूयते'[2] इति। इदानीं ज्ञानरूपां शक्तिं विविच्य तस्याः जगद्धेतुत्वमाह—ज्ञातृज्ञानेति। ज्ञानं नाम जगत्कर्तुरीक्षणव्यवहारप्रवर्तिका मायावृत्तिः साऽऽभासेत्युच्यते। सा च स्वाश्रयस्य मायाशबलितस्य ज्ञातृत्वं सम्पादयति, स्वरूपतो ज्ञानात्मना वर्तते, ज्ञेयं च सृज्यं जगदवभासयन्ती तदाकाराकारिततया ज्ञेयरूपा च भवति। तथा चैवंविधया ज्ञानशक्त्या जगद्भवेदित्यर्थः ॥ १४ ॥

**ज्ञानं द्विधा वस्तुमात्रद्योतकं निर्विकल्पकम्।**
**सविकल्पं तु संज्ञादिद्योतकत्वादनेकधा ॥ १५ ॥**

उक्तां ज्ञानशक्तिं सामान्यविशेषात्मना विभजते—ज्ञानं द्विधेति। वस्तुमात्रद्योतकं 'बहु स्याम्'[3] इति सामान्याकारेण सृज्यसमस्तवस्तूल्लेखीत्यर्थः। पुनराकाशादिभूतभौतिकप्रकारेणानेकधा सृज्यार्थविशेषद्योतकत्वात्तदेव सविकल्पकत्वं संयातीति योजना ॥ १५ ॥

**सङ्कल्पसंशयभ्रान्तिस्मृतिसादृश्यनिश्चयाः।**
**ऊहोनध्यवसायश्च तथान्येनुभवा अपि ॥ १६ ॥**

१ बृ. उ. ३. ७. १५। २. श्वेता. उ. ६-८। ३ तै—३—२-६।

ज्ञानस्य स्वरूपतो भेदाभावेपि ज्ञेयाकारावभासनिबन्धनो भेदो भवतीत्यभिप्रेत्य द्योतकत्वादनेकधेत्युक्तं, तल्लोकानुभवेन प्रपञ्चयति—सङ्कल्पेति ॥ इदमिदानीं करिष्य इत्येवमाकारा मनोवृत्तिः सङ्कल्पः। अनिर्धारितानेककोटिकं ज्ञानं संशयः। सादृश्यमिदमनेन सदृशमित्येवमाकारा वृत्तिः। ऊहो दृष्टसाधर्म्येण वैधर्म्येण वान्यस्योत्प्रेक्षा। अनध्यवसायो दृश्यमानेपि वस्तुनि अनिश्चयमात्ररूपा वृत्तिः,यथा किन्नामायं वृक्ष इत्येवमाकारा। अन्ये प्रसिद्धार्थाः। यथायं विशेषो लोकदृष्टस्तथानुभवा अप्यन्ये यथार्थविषयाः प्रमारूपाः प्रत्यक्षादिभेदेनानेकविधा भवन्तीत्यर्थः ॥ १६ ॥

प्रत्यक्षमेकं चार्वाकाः कणादसुगतौ पुनः।
अनुमानञ्च तच्चापि साङ्ख्याः शब्दञ्च ते अपि॥१७॥
न्यायैकदेशिनोप्येवमुपमानञ्च के चन।
अर्थापत्त्या सहैतानि चत्वार्याह प्रभाकरः ॥ १८॥
अभावषष्ठान्येतानि भाट्टा वेदान्तिनस्तथा।
सम्भवैतिह्ययुक्तानि तानि पौराणिका जगुः॥१९॥

तदेवं वादिविप्रतिपत्त्युपन्यासेन विवृणोति—प्रत्यक्षमित्यादिना ॥ चार्वाकाः दृष्टमात्रतत्त्वबुद्धयः, ते प्रत्यक्षमेवैकमिन्द्रियार्थसन्निकर्षोत्पन्नं यथार्थज्ञानं प्रत्यक्षमिति वदन्ति ॥ कणादः षट्पदार्थतत्त्ववादी। सुगतो बुद्धः क्षणिकज्ञानात्मवादी। तावेतौ अनुमानं व्याप्तिपक्षधर्मताविशिष्टलिङ्गज्ञानलक्षणं तच्चापि प्रत्यक्षमपीति द्वे प्रमाणे इच्छतः ॥ साङ्ख्याः पञ्चविंशतितत्त्ववादिनः शब्दमाप्तवाक्यलक्षणं प्रमाणं,ते अपि प्रत्यक्षानुमाने अपीति त्रीणि प्रमाणानीच्छन्ति ॥१७॥ न्यायै-

कदेशिनोप्येवं त्रीण्येवेच्छन्ति॥ के चन नैयायिकाः गौतमीयाः उपमानं च पूर्वोक्तत्रयापेक्षया चतुर्थमतिदेशवाक्यार्थज्ञानसहकृतसादृश्यविशिष्टपिण्डज्ञानलक्षणं प्रमाणमिच्छन्ति । प्रभाकरो मीमांसकैकदेशी अनुपपद्यमानार्थदर्शनेन तदुपपादकमर्थान्तरकल्पनमर्थापत्तिरित्युक्तलक्षणार्थापत्त्या सहैतानि प्रत्यक्षादीनि चत्वारीति पञ्च प्रमाणान्याह॥१८॥ एतान्युक्तप्रमाणानि,अभावाख्यं प्रमाणमनुपलब्धिलक्षणं षष्ठं येषाम्, एवं षट्प्रमाणानीति भाट्टमतानुसारिणो मीमांसकाः; तथा वेदान्तिनोपि व्यवहारकाले आहुरिति योज्यम्॥ तान्युक्तानि षट्प्रमाणानि सम्भवैतिह्याभ्यां युक्तानि अष्टौ प्रमाणानीति पौराणिका जगुः। सम्भवो नाम खार्यां द्रोणाढकसम्भावनोपनायकं मानम्। ऐतिह्यं त्वस्मिन् वटे यक्षोस्तीत्युपदेशपरम्परामात्रजन्यं ज्ञानमिति भेदः॥ १९॥

**द्रव्यं गुणस्तथा कर्म सामान्यं सविशेषकम्।**
**समवायश्च काणादाः पदार्थान्षट्प्रचक्षते॥ २०॥**

प्रमाणेषु वादिनां तत्त्वभेदे विप्रतिपत्तिमुक्त्वा तत्प्रसङ्गेन तेषां प्रमेयतत्त्वविप्रतिपत्तिं दर्शयन् आदौ वैशेषिकमतमुपन्यस्यति—द्रव्यमित्यादिना॥ गुणवच्च द्रव्यम्॥ जातिमात्राश्रयत्वे सत्यस्पन्दात्मा गुणः॥ चलनात्मकं कर्म॥ नित्यमनेकानुवृत्ति सामान्यम्॥ नित्यद्रव्यमात्राश्रिता विशेषाः॥ नित्यसम्बन्धः समवायः॥ एवंलक्षणभेदभिन्नान् षट्पदार्थान् काणादाः प्रचक्षत इत्यर्थः॥ २०॥

**नव द्रव्याणि भूतानि दिक्कालात्ममनांसि च।**
**चतुर्विंशतिरेव स्युर्गुणाः शब्दादिपञ्चकम्॥ २१॥**

परिमाणं च सङ्ख्या च द्वौ संयोगविभागकौ ।
स्वभावतः पृथक्त्वं च गुरुत्वं द्रवता पुनः ॥ २२ ॥
परत्वं चापरत्वं च स्नेहः संस्कार इत्यपि ।
धीर्द्वेषसुखदुःखेच्छा धर्माधर्मप्रयत्नकाः ॥ २३ ॥

तत्र द्रव्याणि भिनत्ति—नवेति ॥ भूतानि पृथिव्यादीनि पञ्च, दिक्कालात्ममनांसि चत्वारि, एवमेतानि नव द्रव्याणीत्यर्थः ॥ गुणान् भिनत्ति—चतुर्विंशतिरेव स्युर्गुणा इति । तानेव विभजते—शब्दादीति । आदिपदेन स्पर्शरूपरसगन्धा गृह्यन्ते । परिमाणमणुर्ह्रस्वं महद्दीर्घमिति चतुर्विधम् । सङ्ख्या एकत्वादिलक्षणा । संयोगो विभागश्चेति द्वौ । पृथक्त्वं पृथग्व्यवहारासाधारणकारणं द्रव्यगतम् । सोप्येको गुणः । तस्य स्वभावत इति अधिकालापः आकाशादेरुपाधिप्रयुक्तभेदवतोपि न स्वप्रतियोगिकभेदान्तरमस्तीति दर्शयितुम् । गुरुत्वद्रवत्वे प्रसिद्धे ॥२२॥ परत्वमपरत्वं चेति द्वौ गुणौ । स्नेहोऽपामसाधारणो गुणः । संस्काराख्यो गुण अपरः । धीर्बुद्धिः । द्वेषोऽसहिष्णुतालक्षण आत्मगुणविशेषः। सुखदुःखेच्छाः प्रसिद्धाः । धर्मो विहितक्रियाजन्योतीन्द्रियो गुणः । अधर्मः प्रतिषिद्धक्रियाजन्यः तादृशः । प्रयत्न उत्साहः ॥ इति चतुर्विंशतिः गुणाः ॥ २३ ॥

संस्कारस्त्रिविधो वेग इष्वादेर्गतिकारणम् ।
दृष्टश्रुतानुभूतार्थस्मृतिहेतुश्च भावना ॥ २४ ॥
स्थितस्थापकता नाम पूर्ववत्स्थितिकारणम् ।
आकृष्टशाखाभूर्जादौ स्पष्टमेवोपलक्ष्यते ॥ २५ ॥

एतेषु संस्काराख्यं गुणं विभज्योदाहरणेन प्रत्यायय-ति-संस्कारस्त्रिविध इति ॥ धनुर्मुक्तेष्वादेर्गतिकारणं गुणो वेगाख्यसंस्कार इत्यर्थः। दृष्टमित्यनुमानादेरुपलक्षणम्। दृष्ट-श्रुताभ्यामनुभूतार्थविषयस्मृतिहेतुर्गुणो भावनेत्यर्थः ॥२४॥ स्थितस्थापकतेति ॥ स्पष्टार्थः ॥ २५ ॥

उत्क्षेपणमवक्षेपो गमनं च प्रसारणम् ।
आकुञ्चनमिति प्राहुः कर्म पञ्चविधं बुधाः ॥ २६ ॥

कर्मविभागग्रन्थोपि स्पष्टार्थः ॥ २६ ॥

सामान्यं द्विविधं प्रोक्तं परं चापरमेव च ।
परं सत्तैव सर्वत्र तदनुस्यूतवर्तनम् ॥ २७ ॥
द्रव्यत्वं गुणतेत्यादि सामान्यमपरं तथा ।

सामान्यं विभज्य व्याचष्टे—सामान्यमित्यादिना ॥२७॥ सत्तायाः परत्वं नाम व्यापकत्वमित्यभिप्रेत्याह—तदनुस्यूत-वर्तनमिति ॥

विशेषाः स्युरनन्तास्ते व्यावृत्तिज्ञानहेतवः ॥२८॥

विशेषाः स्युरिति च स्पष्टम् ॥ २८ ॥

रूपस्येव घटे नित्यः सम्बन्धः समवायकः ।

नित्यः सम्बन्धः समवायक इति स्वार्थे तद्धितः। तस्यो-दाहरणं—रूपस्येव घट इति ॥

कालाकाशदिगात्मानो नित्याश्च विभवश्च ते ॥२९॥
चतुर्विधाः परिच्छिन्ना नित्याश्च परमाणवः ।

उक्तानां नवानां द्रव्याणां नित्यानित्यविभागमाह—का-लेति ॥

इति वैशेषिकमते पदार्थाः षट्प्रकीर्तिताः ॥ ३० ॥

वैशेषिककल्पनां संक्षेपत उपन्यस्य उपसंहरति—इति वैशेषिकेति ॥ २९ ॥ ३० ॥

माया प्रधानमव्यक्तमविद्याऽज्ञानमक्षरम् ।
अव्याकृतं च प्रकृतिः तम इत्यभिधीयते ॥ ३१ ॥
मायायां ब्रह्मचैतन्यप्रतिबिम्बानुषङ्गतः ।
महत्कालपुमांसः स्युः महत्तत्त्वादहङ्कृतिः ॥ ३२ ॥
तामसात्स्युरहङ्कारात्खानिलाग्न्यम्बुभूमयः ।

इदानीं साङ्ख्यकल्पनां सेश्वरामुपन्यस्यति—मायाप्रधानमित्यादिना ॥ मायादिशब्दैः मूलप्रकृतिरभिधीयते श्रुतिस्मृतिपुराणेष्वित्यर्थः॥३१॥ मायायां ब्रह्मचैतन्यस्य मायाधिष्ठातुरीश्वरचैतन्यस्य यः प्रतिबिम्बः सङ्क्रमः तदनुषङ्गतः तत्संसर्गमहिम्ना महत्तत्त्वं कालः पुमानिति त्रयः पदार्थाः स्युर्जायन्त इत्यर्थः । कालो गुणक्षोभकः । पुमान् कार्योपाधिर्जीवः। तत्र कालो ब्रह्मचैतन्यस्यावस्थाविशेषः प्रकृतिसमावेशकृतः । जीवः संसारी पुमान् स्वतन्त्रोनादिरपि । महत्तत्वं प्रकृतेः प्रथमविकारमवष्टभ्य भोक्तृत्वेनोत्थित इत्यर्थः । महत्तत्त्वादहङ्कृतिरहङ्कारो जायत इति शेषः । सोहङ्कारस्त्रिविधः तामसः सात्त्विको राजसश्चेति ॥ ३२ ॥ तत्र तामसादहङ्कारात् खादयः सूक्ष्मभूतविकल्पाः स्युरित्यर्थः ॥

शब्दः स्पर्शश्च रूपं च रसो गन्धोप्यनुक्रमात् ॥ ३३ ॥
इन्द्रियाणां च विषया भूतानामपि ते गुणाः ।

खादीनां साहङ्कारिकाणां स्वरूपं क्रमेणाह—शब्दः स्पर्श-

श्चेति ॥ ते शब्दादयः इन्द्रियाणां विषयाः भूतानामपि महतां गुणा भवन्तीत्यर्थः ॥

देवाः सदाशिवश्चेशो रुद्रो विष्णुश्चतुर्मुखः ॥ ३४ ॥

उक्तानां भूतसूक्ष्माणामधिष्ठातृदेवानाह—देवा इति ॥ यथाक्रममेते योज्याः ॥ ३३ ॥ ३४ ॥

सात्त्विकात्स्यादहङ्कारादन्तःकरणधीन्द्रियम् ।
मनो बुद्धिरहङ्कारश्चित्तं करणमान्तरम् ॥ ३५ ॥

सात्त्विकाहङ्कारकार्यमाह—सात्त्विकादिति ॥ धीन्द्रियं बुद्धीन्द्रियम् । अन्तःकरणानि धीन्द्रियाणि चेत्यन्तःकरणधीन्द्रियमिति योजना । अन्तःकरणानि विभजते—मनो बुद्धिरिति ॥ ३५ ॥

संशयो निश्चयो गर्वः स्मरणं विषया अमी ।
चन्द्रः प्रजापती रुद्रः क्षेत्रज्ञ इति देवताः ॥ ३६ ॥

तेषां विषयान् क्रमेण निर्दिशन् तत्तद्विषयसाधनत्वं तेषां लक्षणं सूचयति—संशय इति ॥ चतुर्णामन्तःकरणानां देवताः क्रमेणाह—चन्द्र इत्यादिना ॥ ३६ ॥

श्रोत्रं त्वक्चक्षुषी जिह्वा घ्राणं ज्ञानेन्द्रियं विदुः ।
दिग्वातसूर्यवरुणनासत्या इति देवताः ॥ ३७ ॥

बुद्धीन्द्रियाणि विभजते—श्रोत्रमिति ॥ एषामपि क्रमेण देवता आह—दिगिति ॥ ३७ ॥

राजसात्स्युरहङ्कारात्कर्मेन्द्रियसमीरणाः ।
कर्मेन्द्रियाणि वाक्पाणिः पादः पायुरुपस्थकम् ॥ ३८ ॥

**वचनादानगमनविसर्गानन्दसंज्ञकाः ।**
**विषया देवतास्तेषां वह्नीन्द्रोपेन्द्रमृत्युकाः ॥ ३९ ॥**

राजसाहङ्कारकार्यमाह—राजसादिति ॥ कर्मेन्द्रियाणि च समीरणश्चेति विग्रहः । कर्मेन्द्रियाणि सविषयाणि विभजते —कर्मेन्द्रियाणीति । तेषां देवता आह—देवता इति । विषया इत्येतावानंशः पूर्वेण सम्बध्यते, शेष उत्तरेण ॥३८॥३९॥

**प्राणोपानः समानश्चोदानव्यानौ च वायवः ।**

इदानीं समीरणान्विभजते—प्राणोपान इति ॥

**भूतैस्तु पञ्चभिः प्राणैः चतुर्दशभिरिन्द्रियैः॥ ४० ॥**
**चतुर्विंशतितत्त्वानि साङ्ख्यशास्त्रविदो विदुः ।**

एषां प्रचयशिष्टसङ्ख्यामनुक्रामन् उक्तमुपसंहरति—भूतैस्त्विति ॥ अस्य मते मायाब्रह्मादीनां तन्मात्रान्तानां कारणत्वेनानुगमान्न पृथक्तया गणनेति द्रष्टव्यम् । अनेनानीश्वरसाङ्ख्यमतमप्यर्थादुक्तं वेदितव्यम् ॥ तत्रेयान्विशेषः—मूलप्रकृतिः स्वतन्त्रा । विकृतयश्च महदाद्याः सप्त प्रकृतिविकृत्यात्मकाः । तत्र सात्विकाहङ्कारादन्तःकरणं सर्वाणि ज्ञानेन्द्रियाणि च जायन्ते, राजसात्कर्मेन्द्रियाणि, तामसात्पञ्च तन्मात्राणि, तेभ्यः पञ्च महाभूतानि । प्राणास्तु न तत्त्वान्तरं, किन्त्विन्द्रियाणां साधारणवृत्तयः । पुरुषाः अनन्ताः न प्रकृतयो न विकृतयः । कस्य चित्कालश्च भूतं भवद्भविष्यदिति व्यवह्रीयमाणपदार्थव्यतिरेकेण न स्वतन्त्रोस्तीति । तथा च मूलप्रकृतिरेका, प्रकृतिविकृत्यात्मकाः सप्त महदादयः, एकादशेन्द्रियाणि पञ्च महाभूतानि चेति षोडश विका-

रा इति चतुर्विंशतितत्त्वानि पुरुषः पञ्चविंशक इति तेषाम्मतम् ॥

**महान्कालः प्रधानं च मायाविद्ये च पूरुषः ॥ ४१ ॥**
**इति पौराणिकाः प्राहुस्त्रिंशत्तत्त्वानि तैः सह ।**

इदानीं पौराणिकमतमाह—महान् काल इति । महान् प्रकृतेराद्यो विकारः । प्रधानं मूलप्रकृतिः । स्वाश्रयमव्यामोहयन्ती कर्तुरिच्छामनुसरन्ती माया, तद्विपरीता त्वविद्येति भेदः । कालपूरुषौ व्याख्यातौ । यद्वा—कालः ईश्वरस्य चेष्टा । तथा चोक्तं—'योयं कालस्तस्य तेव्यक्तबन्धो चेष्टामाहुश्चेष्टते येन विश्वम्' इति ॥ अव्यक्तं प्रधानं, तस्य बन्धुः प्रवर्तकः अव्यक्तबन्धुः, तस्य सम्बोधनम् हे अव्यक्तबन्धो । पूरुषः परमात्मनोंशः । तदप्युक्तं—'एकस्यैव ममांशस्य जीवस्यैव महामते' इति, 'ममैवांशो जीवलोके जीवभूतस्सनातनः' इति च ॥४०॥४१॥ एतैः षड्भिः पूर्वोक्तैश्चतुर्विंशतितत्त्वैश्च सह त्रिंशत्तत्त्वानि पौराणिकाः प्राहुरित्यर्थः ॥

**बिन्दुनादौ शक्तिशिवौ शान्तातीतौ ततः परम् ॥ ४२**
**षट्त्रिंशत्तत्त्वमित्युक्तं शैवागमविशारदैः ।**

शैवमतमाह—बिन्दुः सर्वाधिष्ठानं सदाशिवाख्यं निर्गुणं तत्त्वम् । नादः तस्यैव प्रणवात्मना सर्वार्थस्फोरकत्वेनाभिव्यक्तं स्वरूपान्तरम् । शक्तिर्मायाविद्याभ्यामन्या सर्वाधिष्ठानसामर्थ्यम् । शिवः शक्तिमानीश्वरो लीलाविग्रहधारी । शान्तातीतौ तस्यैवावस्थाविशेषौ । तथा च श्रुतिः—'तस्यैते तनुवौ घोरान्या शिवान्यो' इति । ततः पूर्वोक्तत्रिंशत्तत्त्वात्

---

१ भगव—१५-७. २ तै.सं—५-७-३.

परमेतैः षाड्विंशत्तत्त्वमिति शैवागमविशारदैरुक्तमिति योजना। शैवागमविशारदग्रहणेनास्याः कल्पनायाः मूलमिदं सूच्यते ॥

**सर्वे विकल्पाः प्रागासन् बीजेङ्कुर इवात्मनि॥४३॥**
**इच्छाज्ञानक्रियारूपमायया ते विजृम्भिताः।**

किं बहुना—यैस्तैर्थिकैर्ये विकल्पाः कृतास्ते सर्वे एकस्यैव परब्रह्मणो मायाविलासाः न परमार्था इति 'बीजस्यान्तरिवाङ्कुर' इत्यनेनोच्यते इति श्रौतं मतमनुसरति—सर्वे विकल्पा इति ॥ क्रिया प्रयत्नः इच्छादिभिर्निरूप्यत इति तथा। यथा कश्चित् कविः काव्यमिच्छया प्रमेयं कल्पयित्वा विचारयति, तथेश्वरोपि तत्तदृष्यादिरूपमास्थाय तत्तदागमनिर्माणं करोति; किंचित् ज्ञानाद्यथादृष्टं लोके वेदे चानुसन्धाय करोति-यथा वेदव्यासादिरूपेण महाभारतादीन् ग्रन्थान्। किञ्चित् प्रयत्नेनापि—यथा महाराजादिरूपेण महानगरदुर्गादि कल्पयति, स एवेश्वरः तथा मायया सहजशक्तिरूपया अनिर्वचनीयया। ते पूर्वोक्ताः कल्पनाप्रकारास्तेनेश्वरेण विजृम्भिताः प्रकटिता न परमार्था इत्यर्थः। यैर्यथा वर्णितं जगत्तत्त्वं तथैव चेत् परमार्थं, तर्हि वादिनां विवादो न स्यात्; दृश्यते च सः, इत्यतो न परमार्थकल्पनेति भावः। विमतं, प्रागुत्पत्तेः नेश्वरात् परमार्थतः पृथक् सत्, ततोत्यन्ताविविक्तलक्षणत्वात्; यदेवं तदेवं, यथा बीजावस्थोङ्कुर इति ॥

**इच्छाज्ञानक्रियापूर्वा यस्मात्सर्वाः प्रवृत्तयः॥४४॥**
**सर्वेपि जन्तवस्तस्मादीश्वरा इति निश्चिताः।**

ईश्वराज्जगतः पृथक्त्वाभावमुत्पत्तेः प्रागवस्थायामुपपाद्य स्थित्यवस्थायामपि तदुपपादयति—इच्छाज्ञानेति । यस्मात् सर्वेषां सर्वाः प्रवृत्तयः इच्छाज्ञानक्रियापूर्वाः ॥४२॥४३॥४४॥ तस्मात्सर्वेऽपि जन्तवः ईश्वरा एव निश्चिताः, इच्छाज्ञानप्रयत्नानां मायाशबलितादीश्वराख्यादन्यत्राचेतनेष्वनुपपत्तेः, परोपाधिभेदपरामर्शमन्तरेण स्वतश्चेतनभेदे प्रमाणाभावात् सर्वजन्तूनां सिद्धमीश्वरादभिन्नत्वम् । तथा च तद्गतेच्छादेर्मायामयत्वात्तन्निमित्तस्य सर्वस्यापि प्रपञ्चस्य युक्तं मायामयत्वमिति भावः ॥

बीजाद्वृक्षस्तरोर्बीजं पारम्पर्येण जायते ॥ ४५ ॥
इति शङ्कानिवृत्त्यर्थं योगिदृष्टान्तकीर्तनम् ।
विश्वामित्रादयः पूर्वे परिपक्वसमाधयः ॥ ४६ ॥
उपादानोपकरणप्रयोजनविवर्जिताः ।
स्वेच्छया ससृजुः स्वर्गं सर्वभोगोपबृंहितम् ॥४७॥
ईश्वरोऽनन्तशक्तित्वात्स्वतन्त्रोऽन्यानपेक्षतः ।
स्वेच्छामात्रेण सकलं सृजत्यवति हन्ति च ॥४८॥

ननु बीजाङ्कुरयोरिव जगदीश्वरयोः यदि कार्यकारणता, तदा वृक्षबीजव्यक्त्यानन्त्यवदीश्वरजगद्व्यक्त्यानन्त्यं भवेत्; तच्चानिष्टं 'न जायते म्रियते वा विपश्चित्'[1] 'अविकार्योऽयमुच्यते'[2] इति श्रुतिस्मृतिविरोधात् ॥ तस्मादयं दृष्टान्तोऽनुपपन्न इत्याशङ्कामुद्भाव्य योगिदृष्टान्तेन प्रत्याचष्टे—बीजादिति ॥ योगिदृष्टान्ततात्पर्यमुदाहरणेन स्पष्ट-

---

१ कठो. २–१८ । २ भगव. २–२५ ।

यति—विश्वामित्रादय इति ॥ दृष्टान्तदार्ष्टान्तिकश्लोकार्थः स्पष्टः ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥

न कारकाणां व्यापारात्कर्ता स्यान्नित्य ईश्वरः ।
नापि प्रमाणव्यापारात् ज्ञाताऽसौ स्वप्रकाशकः ४९

निर्व्यापारः कथमीश्वरः सृष्टिस्थितिसंहारान् कुर्यादित्याशङ्क्याह-न कारकाणामिति॥कारकव्यापारयितृत्वं हि विकारः। स ईश्वरे नास्ति, विकारिणोऽनित्यत्वात्, ईश्वरस्य च नित्यत्वात् । किन्तु, सन्निधिसत्तामात्रेण राजादिवदयस्कान्तादिवद्वा निर्व्यापार एव कारकप्रयोक्ता कर्ता चेत्यर्थः । तथेश्वरस्य ज्ञातृत्वमपि लोकविलक्षणं व्यापारानपेक्षमित्याह—नापीति । स्वप्रकाशक इति । हेतुगर्भं विशेषणम् ॥ ४९ ॥

ज्ञातृत्वमपि कर्तृत्वं स्वातन्त्र्यं तस्य केवलम् ।
या चेच्छाशक्तिवैचित्री सास्य स्वच्छन्दकारिता ५०

उपसंहरति—ज्ञातृत्वमिति ॥ स्वातन्त्र्यं परानपेक्षमित्यर्थः । केवलं स्वगतविकारानपेक्षमित्यर्थः । इच्छाशक्तिरपीश्वरस्य परानपेक्षा अप्रतिहता चेति कथयति—या चेति ॥ ५० ॥

यया कर्तुमथाऽकर्तुमन्यथा कर्तुमर्हति ।
स्वतन्त्रमीश्वरेच्छां के परिच्छेत्तुमिहेशते ॥ ५१ ॥

स्वच्छन्दकारित्वमेव विशदयति—ययेति ॥ ५१ ॥

श्रुतिश्च सोकामयतेतीच्छया सृष्टिमीशितुः ।
तस्मादात्मन आकाशस्सम्भूत इति चाब्रवीत् ॥ ५२

१ च्छां कः..........हते.

ईश्वरस्येच्छापूर्वक एव जगत्सृष्ट्यादिव्यापार इत्यत्र प्रमाणमाह—श्रुतिश्चेति ॥ ५२ ॥

निमित्तं चेद्भवेदस्य जगतः परमेश्वरः ।
विकारित्वं विनाशित्वं भवेदस्य कुलालवत् ॥५३॥

तदेवं स्वात्मनि स्थिते तत्त्वान्यत्त्वाभ्यामनिर्वचनीये नामरूपे स्वमायावेशवशाद्व्याकुर्वन्नीश्वरो जगतः उपादानं निमित्तं वा अविकारितया मायावीव महायोगीवेति च दृष्टान्ताभ्यां स्वमतमुपपादितम् । तच्च सर्वशाखोपनिषदेकवाक्यतोपनिबद्धत्वादर्वाचीनलौकिकप्रमाणाबाध्यमेवेति सिद्धमेव तस्य प्राबल्यम् । इदानीं तटस्थत्वमीश्वरस्य कुलालस्येव निमित्तत्वमिति मते दूषणमाह—निमित्तं चेदिति ॥ अस्य जगतः परमाणूपादानकस्य निमित्तं कर्ता चेदीश्वरः कुलालवत् भवेत् परमार्थतः तदा विकारित्वं क्रियावत्त्वं तस्य प्रसज्येत । न हि स्वयं क्रियाहीनोन्यं विकारयितुमीष्टे । क्रियावत्त्वे च शरीरित्वाद्विनाशित्वमवश्यं भवेत् । न हि विक्रियमाणं च नित्यं चेति मां प्रत्युदाहरणमस्ति । तस्मात् परमार्थतः कर्तृत्वे विकारित्वादिदोषप्रसङ्गो दुर्वार इत्यभिप्रायः ॥ ५३ ॥

बुद्ध्यादयो नव गुणा नित्या एवेश्वरस्य चेत् ।
नित्येच्छावान् जगत्सृष्टौ प्रवर्तेतैव सर्वदा ॥ ५४ ॥

भगवत ईश्वरस्य नित्यज्ञानेच्छादिमत्त्वस्य धर्मिग्राहकप्रमाणसिद्धत्वात्तेन च शरीरवैलक्षण्यसिद्धेर्नोक्तदोषावकाश इति चेत्तत्राह-बुद्ध्यादय इति।नव गुणा इति जीवात्माभिप्रायम्।तेषामपीश्वरेण जगत्सर्गादावुपादीयमानत्वादीश्वरस्येत्युक्तम्।यद्वा—तत्तद्द्रव्योपाधौ यावन्तो गुणाः यस्य द्रव्यस्य निर्दि-

ष्टास्ते तद्द्रव्यव्यक्तिषु सर्वासु समा एव । यथा पृथिव्याश्चतुर्दश गुणाः सर्वपृथिवीव्यक्तिषु तावन्तो न न्यूनाः नाप्यधिकाः, तथात्मत्वावच्छिन्नात्मद्रव्यस्याप्यात्मत्वोपाधौ सर्वत्र चतुर्दशगुणविशेषवत्तया भवितव्यम् । तथा चेश्वरस्याप्यात्मद्रव्यान्तःपातित्वात् बुद्ध्यादयो नव विशेषगुणाः स्युरित्यापाद्यवचनमेतद्द्रष्टव्यम् । ते चेदीश्वरस्य नित्या निरपेक्षाश्च तदा दोषं प्रसञ्जयति—नित्येच्छावानिति ॥ ५४ ॥

**प्रवृत्त्युपरमाभावात्संसारो नैव नश्यति ।**
**मोक्षोपदेशो व्यर्थस्स्यादागमोपि निरर्थकः ॥५५॥**

अस्तु तर्हि सर्वदा प्रवृत्तिः, ततः किं स्यादित्यत आह—प्रवृत्तीति ॥ मास्तु संसारनाशः तत्राह—मोक्षोपदेश इति । न केवलं मोक्षोपदेशवैयर्थ्यमात्रं, शास्त्रप्रणयनं च निरर्थकं स्यादित्याह—आगमोपि निरर्थक इति ॥ ५५ ॥

**तस्मान्मायाविलासोयं जगत्कर्तृत्वमीशितुः ।**
**बन्धमोक्षोपदेशादिव्यवहारोपि मायया ॥ ५६ ॥**

परमते दुष्टत्वे ज्ञापिते स्वमतं तेन न बाध्यं सिद्धमित्युपसंहरति—तस्मादिति ॥ अस्मन्मते बन्धादेरपि मायिकत्वात् मोक्षोपदेशोपि मायिक एवाभ्युपगम्यते । तस्य स्वरूपतो मायिकत्वेपि सत्यार्थविषयत्वादस्मन्मोक्षशास्त्रस्य प्रामाण्यमारोपितं वर्णदैर्घ्यादिवन्न विरुध्यत इति सर्वमवदातम् ॥५६॥

**इति श्रीदक्षिणामूर्तिस्तोत्रार्थप्रतिपादके ।**
**प्रबन्धे मानसोल्लासे द्वितीयोल्लाससङ्ग्रहः ॥५७ ॥**

द्वितीयश्लोकव्याख्यामुपसंहरति—इतीति ॥ ५७ ॥

इति श्रीमानसोल्लासवृत्तान्ते द्वितीयोल्लासः समाप्तः ॥२॥

---

**सत्तास्फुरत्ते भावेषु कुत आगत्य सङ्गते ।**
**बिम्बादिदर्पणन्यायादित्थं पृच्छन् प्रबोध्यते ॥१॥**

सर्वार्थद्रष्टृत्वेनोपलक्षितः चिदात्मा त्वम्पदार्थ इति प्रथमश्लोकार्थः, सर्वं जगत् स्वात्मन्यापीय स्वयमेव विश्वं स्वमायया विजृम्भयन् सर्वानुस्यूतसदात्मत्वेनोपलक्षितश्चिदात्मा तत्पदार्थ इति द्वितीयश्लोकार्थः इति तात्पर्यमुपवर्ण्य इदानीं पदार्थद्वयैक्यवाक्यार्थप्रकाशनपरं तृतीयश्लोकं व्याख्यातुं प्रश्नानुत्थापयति—सत्तास्फुरत्ते इति ॥ यदुक्तं सत्तास्फुरत्ते न दृश्यधर्मौ किन्तु द्रष्टृधर्माविति' तत्रेदं पृच्छामि—यदि दृश्येषु ते न स्तः कथं तर्हि तेषूपलभ्येते? इति। द्रष्टृनिष्ठे एव सती भासेते इति चेत्तर्हि किं दर्पणादाविव मुखादि दृश्येषुप्रतिबिम्बभावमाचरतः? इति ॥ एतच्च नोपपद्यते ॥ अमूर्तयोस्तयोः प्रतिबिम्बभावानुपपत्तेः। अत एव चायःपिण्डादावग्नेरिव सङ्क्रमोप्यनुपपन्नः । अतः कथं सर्वसत्तास्फुरणरूपं ब्रह्म आत्मेति पृच्छन् शिष्यो निषिध्यते उत्तरश्लोकेनेत्यर्थः॥२॥

**'यस्यैव स्फुरणं सदात्मकमसत्कल्पार्थकं भासते साक्षात्तत्त्वमसीति वेदवचसा यो बोधयत्याश्रितान् ॥**
**यत्साक्षात्करणाद्भवेन्न पुनरावृत्तिर्भवाम्भोनिधौ तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥ ३ ॥**

यस्यैव चिदात्मन एव स्फुरणं स्वरूपप्रकाशः सदात्मकं सन्मात्रं सदा सर्वानुस्यूतं भासते स्वयमेव स्फुरति सच्चिदात्मा दक्षिणामूर्तिःतस्मै नम इत्यन्वयः । स्फुरणविशेषणम्—असत्कल्पार्थकमिति । असत्तुल्यो नात्यन्तमसन्नेवार्थो विषयो यस्य तत्तथा; अनिर्वचनीयविषयाकारमित्यर्थः । न तु विषयो

भासमानः,सन्, आगमापायित्वात्, शुक्तिरजतवत्; नाप्यत्यन्तमसन्, अपरोक्षप्रतिभासात् अर्थक्रियाकारित्वाच्च, मायाविनिर्मितनद्यादिवदित्यर्थः। तथा च विषयाणां चिदात्मव्यतिरेकेण स्वरूपानिरूपणाच्चिदात्मनि मायाकल्पितान् विषयाकारान् दृग्दृश्यादिविवेकज्ञानेनाभिभूय स्वयमद्वयं प्रत्यस्तमितसमस्तविशेषाकारमात्मानमनुभवन् 'तत्त्वमसि' इति वेदवचसा य आश्रितान् उपासकानात्मजिज्ञासून् साक्षात् बोधयति तस्मै श्रीगुरुमूर्तये इत्यन्वयः।ज्ञाननिवर्त्यत्वादपि प्रपञ्चरूपो बन्धोऽज्ञानकल्पितः, न परमार्थ इत्यभिप्रेत्याह—यत्साक्षात्करणादिति । भवाम्भोनिधौ अम्भोनिधिवदपारे अगाधे दुस्तरे भवे संसारे न पुनरावृत्तिः । पुनः संसाराभाव इत्यर्थः ॥ ३ ॥

इदमत्राकूतम्—

श्लोकव्याख्यामारभते—इदमत्राकूतमिति॥ अभिप्रेतमित्यर्थः ॥

**असत्कल्पेषु भावेषु जडेषु क्षणनाशिषु ।**
**अस्तित्वं च प्रकाशत्वं नित्यात्सङ्क्रामतीश्वरात्॥२॥**

यदुक्तं भावेष्वात्मसत्तास्फुरणे कुतः आगत्य सङ्गते, प्रतिबिम्बभावेन वा सङ्क्रमणेन वा सङ्गते इति । तत्र १ किं भावेषु पृथग्दर्पणादयः पिण्डादिवद्विद्यमानेषु कथं सङ्गते इति पृच्छसि? २ किं वा भावानामेव स्वतः सत्तास्फुरणसम्भवे किमात्मसत्तास्फुरणसङ्क्रमेणेति? १ तत्राद्यं प्रत्याह—असत्कल्पेष्विति॥ असत्कल्पत्वे हेतुर्जडेष्विति।विमतम्, अनिर्वचनीयं सद्विलक्षणमिति वा, जडत्वाच्छुक्तिरजतवदित्यर्थः । जडत्वे हेतुः क्षणनाशिष्विति । विप्रतिपन्नं, जडं, दृष्टनष्टस्वरूपत्वात्, शुक्तिर-

जतवदित्यर्थः। एवंविधेषु भावेषु नित्यादीश्वरादस्तित्वं च प्रकाशत्वं च सङ्क्रामद्विषयस्थमिव विषयाकारमवभासेते रजतात्मनेव शुक्तिसत्तास्फुरणे इत्यर्थः। अत्र सङ्क्रमणशब्दो विशेषाकारावभासाभिप्रायः, न प्रवेशाभिप्रायः; न हि रजते समारोपिते शुक्तिसत्ता सङ्क्रामति, समारोपितस्याधिष्ठानव्यतिरेकेण स्वरूपाभावात्; तद्वदिदमपीति भावः ॥ २ ॥

**आत्मसत्तैव सत्तैषां भावानां न ततोधिका।**
**तथैव स्फुरणं चैषां नात्मस्फुरणतोधिकम् ॥ ३ ॥**

भावानां मिथ्यात्वमुक्तं स्पष्टयति—आत्मसत्तैवेति ॥ यदि दर्पणादिवत् पृथक्सत्सु भावेषु प्रतिबिम्बः सङ्क्रामो वा आत्मसत्तास्फुरणयोस्स्यात्। तदा मुखवियुक्तदर्पणवच्छीतकायःपिण्डवद्वा भावाः पृथगवभासेरन्,नावभासन्ते। अतः आत्मसत्तास्फुरणाधिकसत्तास्फुरणाभावात् पार्थगर्थ्याभावे सति न प्रतिबिम्बः सङ्क्रमो वा कस्यचित्क्कापीत्यभिप्रायः ॥ ३ ॥

**ज्ञानानि बहुरूपाणि तेषां च विषया अपि।**
**अहङ्कारेनुषज्यन्ते सूत्रे मणिगणा इव ॥ ४ ॥**

२ द्वितीयं निराकरोति—ज्ञानानीति॥ यानि बहुरूपाणि बहुप्रकाराणि ज्ञानानि, तेषां ये विषयास्ते सर्वे अहङ्कारे साभासान्तःकरणवृत्तिविशेषेनुषज्यन्ते ग्रथ्यन्ते सूत्रे मणिगणा इवेति योजना। तथा च सच्चिदात्मनि तादात्म्याध्यासपरिनिष्पन्नान्तःकरणव्याप्त्यैव विषयसत्तास्फुरणे, न स्वत इत्यभिप्रायः। पूर्वत्र परमार्थदृष्टिमाश्रित्य विषया एव न सन्ति यत्रात्मसत्तास्फुरणसङ्क्रम इत्युक्तम्। अनेन व्यवहारदृष्टिमाश्रित्य साभासान्तःकरणप्रणालिकया आत्मसत्ताद्यनुगम-

मन्तरेण न बाह्यविषयेषु सत्तादिरस्तीत्युक्तमिति विशेषो द्रष्टव्यः ॥ ४ ॥

**प्रकाशाभिन्नमेवैतद्विश्वं सर्वस्य भासते ।**
**लहरीबुद्बुदादीनां सलिलान्न पृथक्स्थितिः ॥ ५ ॥**

तस्माद्यद्यदधीनसत्तास्फूर्तिमत्तत्तस्मिन् परिकल्पितं, यथा जलाधीनसत्तास्फूर्तिमद्बुद्बुदादि जले कल्पितम्, तथेमे भावाः सच्चिदात्माधीनसत्तास्फूर्तिकास्तस्मिन् परिकल्पिता इति सिद्धं सच्चिदात्मनोस्तत्त्वम्पदार्थयोरद्वितीयत्वं परमार्थमित्युपसंहरति—प्रकाशाभिन्नमिति ॥ सर्वस्य व्यवहर्तुः प्राणिमात्रस्येत्यर्थः ॥ ५ ॥

**जानामीत्येव यज्ज्ञानं भावानाविश्य वर्तते ।**
**ज्ञातं मयेति तत्पश्चाद्विश्राम्यत्यन्तरात्मनि ॥ ६ ॥**

विषयस्फूर्तिरात्मधर्म एव, न विषयधर्म इत्येतदुपपादयति—जानामीति ॥ यत् ज्ञानं जानामीत्यत्र सर्वकर्मत्वेनोल्लिख्यमानं भावान्विषयानाविश्य वर्तते, तत् ज्ञानं पश्चादन्तरात्मनि मया ज्ञातमिति विश्राम्यति पर्यवस्यतीत्यर्थः ॥ ६ ॥

**घटादिकानि कार्याणि विश्राम्यन्ति मृदादिषु ।**
**विश्वं प्रकाशाभिन्नत्वाद्विश्राम्येत्परमेश्वरे ॥ ७ ॥**

तत्र दृष्टान्तमाह—घटादिकानीति ॥ दार्ष्टान्तिकमाह—विश्वमिति । अयं भावः—यद्यपि इदमहं जानामि, विज्ञातमिदंमयेति च सविषयं ज्ञानं विभाव्यत इति समानमेव ॥ तथापि प्रथमप्रयोगे कर्तुः क्रियया कर्मव्याप्तिमात्रं विवक्षितमिति भावानाविश्येत्युक्तम्; द्वितीये तु सकर्मकायाः

क्रियायाः स्वसमवेतत्वेनानुसन्धानस्य विवक्षितत्वात् परमात्मनि विश्राम्येदित्युक्तमिति । यस्य यत्कार्यं तदन्योपरक्ततया भासमानमपि स्वकारण एव विश्राम्यति, कार्यं च कारणान्नात्यन्तभिन्नमिति दृष्टान्तदार्ष्टान्तिकयोरभिप्रायः ॥

यद्वा—विषयगतप्रकाशस्यात्ममात्रात्मकतामुक्त्वा प्रकाश्यस्य विषयस्यापि ज्ञानप्रकाशानुविद्धतयैव नियमेनोपलम्भात्तदेकात्मत्वमिति प्रकाशात्मन्यध्यस्तत्वादेव प्रकाशवैशिष्ट्येन भानं विषयाणामित्यभिप्रेत्य दृष्टान्तं सदार्ष्टान्तिकमाह—घटादिकानीति ॥ यथातथाशब्दौ पूर्वोत्तरार्धयोरध्याहर्तव्यौ ॥ ७ ॥

**स्वगतेनैव कालिम्ना दर्पणं मलिनं यथा ।**
**अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः ॥ ८ ॥**

यद्येवमद्वितीयमेव तत्त्वं, तर्हि कथं सर्वो लोको न प्रत्येतीत्याशङ्क्य सहजदोषवशादित्यभिप्रेत्य दृष्टान्तेनोपपादयति—स्वगतेनैवेति ॥ यथा दर्पणगतेन कालिम्ना दर्पणस्वभावः आच्छाद्यते, तथा स्वगतेनानाद्यनिर्वचनीयेनअज्ञानेनात्मयाथार्थ्यमाच्छाद्यते । तेनाच्छादनेन जन्तवो मुह्यन्ति, मोहं मिथ्याज्ञानं द्रष्टृदृश्यकार्यकारणादिविभागं परमार्थविषयकं प्राप्नुवन्तीत्यर्थः ॥ ८ ॥

**घटाकाशो महाकाशो घटोपाधिकृतो यथा ।**
**देहोपाधिकृतो भेदो जीवात्मपरमात्मनोः ॥ ९ ॥**

एवं सर्वस्य भेदव्यवहारस्य मूलमज्ञानमित्युक्त्वा जीवेश्वरभेदभाने त्वाधिकं निमित्तं दृष्टान्तेनाह—घटाकाश इति ॥ यथा स्वभावतोनवच्छिन्ने आकाशे घटमुपाधिं निमित्तीकृत्य

घटेन क्रोडीकृतत्वेनांशं कल्पयित्वा घटाकाश इत्येको भागो व्यपदिश्यते, घटाद्बहिष्ठापेक्षया महाकाश इति, न परमार्थतः आकाशस्यामूर्तस्य केनचित् परिच्छेदः सम्भवति; तथा जीवात्मपरमात्मनोर्देहोपाधिकृतो भेदो द्रष्टव्यः, निरंशे परमात्मन्यवच्छेदस्य परमार्थतोनुपपत्तेः । तथा च देहेनाहं मनुष्य इत्यादिप्रकारेण विशेष्यमाणः स एव चिदात्मा जीवात्मेत्युच्यते, स एव तेनाविशेष्यमाण ईश्वर इति । देहादेश्चोपाधेश्चिदात्मन्यध्यासमन्तरेण सम्बन्धानिरूपणान्न जीवेश्वरयोर्वास्तवो भेदः सम्भवतीत्यभिप्रायः । जीवस्य परमात्मांशत्वतद्विकारत्वास्वतन्त्रत्वपक्षाः अग्रे निरसिष्यन्ते ॥ ९ ॥

**तत्त्वमस्यादिवाक्यैस्तु तयोरैक्यं प्रदर्श्यते ।**
**सोयं पुरुष इत्युक्ते पुमानेको हि बुध्यते ॥ १० ॥**

यस्मादारोपितदेहाद्युपाधिनिबन्धनो भेदप्रतिभासः तस्मादेव तादात्म्योपदेशो जीवपरयोर्भेदांशबाधनश्रुत्योपदिश्यत इत्याह—तत्त्वमस्यादिवाक्यैरिति ॥ प्रदर्श्यते ज्ञाप्यते, न तु विधीयते, अन्यस्यान्यात्मत्वविधानायोगात् सिद्धमेवैक्यं विरुद्धांशापोहेन प्रकटीक्रियत इत्यर्थः । तत्र लोके प्रसिद्धं दृष्टान्तमाह—सोयमिति ॥ १० ॥

**यज्जगत्कारणं तत्त्वं तत्पदार्थः स उच्यते ।**
**देहादिभिः परिच्छिन्नो जीवस्तु त्वम्पदाभिधः॥११॥**

वाक्यार्थप्रत्ययोत्पत्तिप्रकारं वक्तुं प्रथमं वाक्यनिविष्टयोः पदयोर्वाच्यार्थलक्ष्यार्थभेदं कथयति—यज्जगदिति ॥ अधिदैवावस्थविक्षेपशक्तिप्रधानमायादिशब्दवाच्याज्ञानतत्कार्यभू-

तभौतिकप्रपञ्चोपहिततया परोक्षत्वादिधर्मविशिष्टः चिदात्मा तत्पदवाच्यार्थ इत्यर्थः। त्वम्पदवाच्यमाह—देहादिभिरिति। अध्यात्मावस्थावरणशक्तिप्रधानाविद्यादिशब्दवाच्याज्ञानतत्कार्यदेहद्वयप्रपञ्चोपहिततया अपरोक्षत्वादिधर्मविशिष्टश्चिदात्मा त्वम्पदवाच्यार्थ इत्यर्थः ॥ ११ ॥

तद्देशकालावस्थादौ दृष्टः स इति कथ्यते ।
तथैतद्देशकालादौ दृष्टोऽयमिति कीर्त्यते ॥ १२ ॥

परोपाधिविशिष्टस्य वाच्यार्थत्वे दृष्टान्तमाह—तद्देशकालेति ॥ स्पष्टार्थः ॥ १२ ॥

मुख्यं तदेतद्वैशिष्ट्यं विसृज्य पदयोर्द्वयोः ।
पुम्मात्रं लक्षयत्येकं यथा सोयंपुमान्वचः ॥ १३ ॥

वाच्यांशे विरुद्धांशपरित्यागेनोभयानुगताविरुद्धांश उभयत्र लक्ष्यार्थ इति मत्वा लक्षणयाऽखण्डवाक्यार्थबोधनं सोयं देवदत्त इति वाक्यदृष्टान्तेनोपपादयति—मुख्यमिति ॥ तद्वैशिष्ट्यं स इति पदनिर्दिष्टं परोक्षदेशकालादिवैशिष्ट्यम्। एतद्वशिष्ट्यं अयमिति पदनिर्दिष्टमपरोक्षदेशकालादिवैशिष्ट्यम्। मुख्यं वाच्यं विसृज्यानुगतमुभयत्र पुम्मात्रम् ॥ १३ ॥

प्रत्यक्त्वं च पराक्त्वं च त्यक्त्वा तत्त्वमसीति वाक् ।
तथैव लक्षयत्यैक्यं जीवात्मपरमात्मनोः ॥ १४ ॥

यथा सोयं देवदत्त इति वाक्यं लक्षयत्यखण्डम् एवं तत्त्वमसिवाक्यमपि स्वपदार्थगतविरुद्धांशप्रहाणेनानुगतचिन्मात्रांशमादायाखण्डं तत्त्वं लक्षयेदित्याह—प्रत्यक्त्वं चेति ॥ १४ ॥

**सामानाधिकरण्याख्यः सम्बन्धः पदयोरिह ।**
**विशेषणविशेष्यत्वं सम्बन्धः स्यात्पदार्थयोः ॥ १५ ॥**

एतच्च सम्बन्धत्रयोपेतं सद्वाक्यार्थं बोधयतीति सम्बन्धत्रयं व्युत्पादयति—सामानाधिकरण्याख्य इति ॥ पदयोः सामानाधिकरण्याख्यः सम्बन्धः । सामानाधिकरण्यलक्षणं वक्ष्यति । पदार्थयोर्वाच्ययोः विशेषणविशेष्यत्वं सम्बन्धः । यथा सोयमयं स इति परस्परभेदभ्रमव्युदासाय विशेषणविशेष्यभावः, तथा तत्त्वम्पदार्थयोरपीत्यर्थः ॥ १५ ॥

**लक्ष्यलक्षणसंयोगाद्वाक्यमैक्यं च बोधयेत् ।**

वाच्यांशयोर्विरोधे सति पदयोः सामानाधिकरण्यं श्रूयमाणं यदा नोपपद्यते, तदा लक्षणया वाच्यार्थैकदेशमादाय सामानाधिकरण्ये सत्यखण्डार्थसिद्धिरित्यभिप्रेत्याह—लक्ष्यलक्षणसंयोगादिति ॥ प्रत्यक्चैतन्यपदयोर्लक्ष्यलक्षणभावः सम्बन्धो लक्ष्यलक्षणसंयोगशब्दार्थः ॥

**गङ्गायां घोष इतिवन्न जहल्लक्षणा भवेत् ॥ १६ ॥**
**नाजहल्लक्षणापि स्याच्छ्वेतो धावतिवाक्यवत् ।**

तत्र लक्षणा त्रिविधा, जहल्लक्षणा अजहल्लक्षणा जहदजहल्लक्षणा चेति प्रसिद्धा । तत्र का लक्षणेह वाक्यार्थबोधे ग्राह्येत्याकाङ्क्षायां तृतीयां परिशेषयितुं इतरे द्वे अपि निरस्यति—गङ्गायां घोष इतिवदिति ॥ वाच्यार्थमशेषतः परित्यज्य तत्सम्बन्धिन्यर्थान्तरे वृत्तिर्जहल्लक्षणोच्यते, यथा गङ्गापदं स्ववाच्यं प्रवाहमशेषं परित्यज्य तत्सम्बद्धतीरं लक्षयति, तद्वदिह लक्षणा न सङ्गच्छते, जडाजडात्मसम्भेदात्मकस्याशेषवाच्यस्य परित्यागे तत्सम्बन्धिनः पदार्थस्यान्यस्य ल-

क्षणीयस्याभावाच्छून्यपर्यवसायि वाक्यं स्यात्। तच्चानिष्टम्, असिपदेन सन्मात्रवाचिना समभिव्याहारविरोधादित्यभिप्रायः॥१६॥ अजहल्लक्षणाप्यत्र न स्यात्; यथा श्वेतो धावतीत्युक्ते गुणवाचिना श्वेतशब्देन तदाश्रयद्रव्यं वाच्यार्थगुणापरित्यागेन लक्ष्यते, नैवमिह वाच्यार्थापरित्यागेन तत्सम्बन्धिनि वृत्तिरित्येवंलक्षणा अजहत्स्वार्थापि सम्भवति; विरोधस्य तादवस्थ्यात्, ऐक्यवाक्यार्थासिद्धौ सामानाधिकरण्यबाधप्रसङ्गाच्चेत्यभिप्रेत्याह—नाजहल्लक्षणापि स्यादिति ॥

तत्त्वमस्यादिवाक्यानां लक्षणा भागलक्षणा॥१७॥
सोयं पुरुष इत्यादिवाक्यानामिव कीर्तिता।

परिशेषाज्जहदजहल्लक्षणैवात्रोचितेति सदृष्टान्तमाह—तत्त्वमसीति ॥ उभयोः पदार्थयोः जडांशपरित्यागेन सर्वानुगतचिन्मात्रं लक्षणया समादायाखण्डवाक्यार्थं बोधयति तत्त्वमसिवाक्यम्॥१७॥ यथा सोयं पुरुष इति वाक्यं तदेतद्देशकालशाबल्यांशं परित्यज्योभयावस्थानुस्यूतं पुरुषस्वरूपमात्रमादायाखण्डमर्थं बोधयति तद्वदित्यर्थः ॥

भिन्नवृत्तिनिमित्तानां शब्दानामेकवस्तुनि ॥१८॥
प्रवृत्तिस्तु समानाधिकरणत्वमिहोच्यते।

सामानाधिकरण्यं पदयोः सम्बन्ध इत्युक्तम्। तस्य लक्षणमाह—भिन्नवृत्तीति ॥ पर्यायशब्दव्यावृत्त्यर्थं भिन्नवृत्तिनिमित्तानामित्युक्तम्। वृत्तिः प्रवृत्तिः। घटः पटः स्तम्भ इत्याद्यनेकार्थनिष्ठशब्दव्यावृत्तये एकवस्तुनीत्युक्तम् ॥ १८ ॥

परस्यांशो विकारो वा जीवो वाक्येन नोच्यते॥१९॥
जीवात्मना प्रविष्टत्वात्स्वमायासृष्टमूर्तिषु।

**निरंशो निर्विकारोसौ श्रुत्या युक्त्या च गम्यते ॥२०॥**
**घटाकाशो विकारो वा नांशो वा वियतो यथा ।**

नन्वेतत्पदयोः सामानाधिकरण्यं संसृष्टार्थपरत्वेपि सङ्गच्छते, अतः किमित्यप्रसिद्धमखण्डार्थपरत्वमास्थीयत इति चेत्, तत्र वक्तव्यं—किं तत्त्वम्पदार्थयोः कराङ्गुल्यादिवत् अंशांशिभावः संसर्गः १, किं वा भूम्यूषरवत् विकारविकारित्वं २, किं वात्यन्तभेदेपि स्तोतृस्तुत्यभावः ३, अथ वा सादृश्ययोगः ४, कार्यकारणभावो वा ५, जातिव्यक्तिभावो वा ६, गुणगुणित्वलक्षणो वा ७, उपासकगतोपासनाकर्मत्वं वा ८, अन्यतरस्यान्यतरभावकल्पनाविषयत्वं वा ९ ? । तत्र १, २–नाद्यावित्याह—परस्यांश इति ॥ कथं जीवः परमात्मनोंशो विकारो वा न भवति ? 'ममैवांशो जीवलोके जीवभूतस्सनातनः[1]' इति स्मृतौ जीवस्य परमात्मांशत्वावगमात्, 'सर्व एत आत्मानो व्युच्चरन्ति[2]' इति श्रुतौ विकारत्वावगमाच्चेति चेत् ॥ मैवम् ॥ प्रवेशश्रुतिविरोधादित्याह—जीवात्मनेति । 'तत्सृष्ट्वा । तदेवानुप्राविशत्[3]' 'अनेन जीवेनात्मनानुप्रविश्य[4]' 'स एष इह प्रविष्ट आ नखाग्रेभ्यः[5]' 'स एतमेव सीमानं विदार्य एतया द्वारा प्रापद्यत[6]' 'अन्तः प्रविष्टः शास्ता जनानाम्' 'अन्तः प्रविष्टं कर्तारमेतम्[7]' इत्याद्यनेकश्रुतिषु स्रष्टुरीश्वरस्य स्वसृष्टेषु संघातेष्वविकृतस्यैव प्रवेशः श्रूयते।अतोनेन प्रवेशवाक्यसन्दोहेनाविरोधाय मायातत्कार्योपाधिकल्पितावच्छेदभेदमाश्रित्यांशस्मरणं विकारापत्तिश्रवणं चौपचारिकं व्याख्येयमित्यभिप्रायः ॥ १९ ॥

---

१ भग. गी—१५-७। २ बृ. उ—४-१-२०. माध्यन्दिनपाठे। ३ तै. उ—२-६। ४ छा. उ—६-३-२। ५ बृ. उ—१-४-७। ६ ऐ. उ—१-३-१२ ७ तै. आ—३-११।

ननु प्रवेशश्रुतेरपि घटे चूर्णवत् फले बीजवद्वा प्रवेशः ईश्वरस्य सृष्टेषु कार्येष्वित्यङ्गीकारेंशादिप्रमाणाविरोध इति चेत्॥ एतदप्यसत्॥ निरंशत्वनिर्विकारत्वश्रुतियुक्तिविरोधादित्याह—निरंश इति ॥ 'निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्'[1] 'नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययम्'[2] इत्यादिश्रुतिभिः, 'अच्छेद्योयमदाह्योयमविकार्योयमुच्यते'[3] इति स्मृतिभिश्च निरंशो निर्विकारोऽसावीश्वरात्मा गम्यते ज्ञायत इत्येका योजना। युक्त्या च निरंशो निर्विकारश्चासौ गम्यत इत्यपरा। युक्तिश्च जगत्कर्तुस्तावत् सावयवत्वे तस्यान्यपूर्वत्वनियमात् सृज्यकोटिपतितत्वेन जगत्कर्तृत्वव्याहतेः सर्वज्ञत्वसर्वशक्तित्वायोगादनीश्वरत्वापत्तिः। जगत्कर्त्रनवस्था च कर्त्रन्तराभ्युपगमे स्यात्। 'स कारणं कारणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः'[4] इति ईश्वरविषयश्रुतिबाधप्रसङ्गाच्च। तथा विकारोपीश्वरे न युज्यते। विकारो नाम परिणामः परिस्पन्दो वा परस्परसम्बन्धकृतातिशययोगो वा। सर्वथापि नोपपद्यते, अमूर्ते निरवयवे सन्मात्रे सर्वप्रकारस्यापि विकारस्यानुपपत्तेरिति॥ २०॥ विभुनोंशविकारयोरभावे दृष्टान्तमाह—घटाकाश इति। विमतो, नांशविकारवान्, विभुत्वादाकाशवदित्यर्थः॥

## त्वमिन्द्रोसीतिवद्वाक्यं न खलु स्तुतितत्परम्॥२१॥

इदानीं ३ तृतीयं विकल्पमपाकरोति—त्वमिन्द्रोसीति॥ यथाऽनिन्द्र एव सन् कश्चिदिन्द्रत्वारोपणेन स्तूयते त्वमिन्द्रोसीति, यथाऽनीश्वर एव सन् जीवः ईश्वरत्वारोपणेन

---

१ श्वे. उ—६-१९। २ मु० उ—१-१-६। ३ भग. गी—२-२४। ४ श्वे. उ—६-९।

स्तूयते तत्त्वमसीति, एवमेतद्वाक्यं स्तुतिपरमिति न खलु वाच्यमिति योजना । 'सदेव सौम्येदमग्र आसीदेकमेवाद्वितीयम्'[1] 'ऐतदात्म्यमिदं सर्वम्'[2] इत्युपक्रमोपसंहारयोर्निरङ्कुशाद्वितीयत्वश्रवणविरोधाज्जीवस्येश्वराद्भेदाभावे सति स्तुतिकल्पनाया अनवकाशादित्यर्थः ॥ २१ ॥

**न सादृश्यपरं वाक्यमग्निर्माणवकादिवत् ।**
**न कार्यकारणत्वस्य साधनं मृद्घटादिवत् ॥ २२ ॥**

४ चतुर्थं पक्षं प्रतिक्षिपति—न सादृश्यमिति ॥ गुणावयवक्रियाणामन्यतमभूयस्त्वसामान्यं सादृश्यं तदीश्वरे निर्गुणे निरवयवे निष्क्रिये कुतस्त्यमिति, अतः 'अग्निर्माणवकः' इत्यादिवन्न सादृश्यपरमिदं वाक्यमित्यर्थः ॥

५ पञ्चमं पक्षमपक्षिपति—न कार्यकारणत्वस्येति ॥ अयमर्थः—निरवयवत्वादेकद्रव्यत्वाच्चारम्भकत्वानुपपत्तेः, कात्स्र्न्यैकदेशविकल्पासहत्वाच्च परिणामानुपपत्तेः, संघातादिवादस्य दूरापास्तत्वान्न मृद्घटवत् कार्यकारणभावो जीवेश्वरयोरिति न तत्परत्वं सामानाधिकरण्यस्येहेति ॥ २२ ॥

**न जातिव्यक्तिगमकं गौः खण्ड इतिवद्वचः ।**
**गुणगुण्यात्मकं वाक्यं नैतन्नीलोत्पलादिवत् ॥२३॥**

६ षष्ठं दूषयति—न जातीति॥ जीवरूपव्यक्तिषु ईश्वरो जातिरिति कल्पनायामीश्वरस्य गोत्वादिवदचेतनत्वे सत्यनीश्वरत्वापत्तेः । ईश्वरो हि सकलविषयज्ञानेच्छाप्रयत्नवानिति धर्मिग्राहकप्रमाणतस्सिद्धम् । अतो नेदं वाक्यं जातिव्यक्तिपरमित्यर्थः ॥

---

[1] छा. उ—६-२-१ । [2] छा उ—६-८-७ ।

७ नापि सप्तम इत्याह—गुणगुण्यात्मकमिति । ईश्वरस्य जीवगुणकत्वे तेन विशेष्यमाणस्य तद्वत् संसारित्वापत्तेः सर्वज्ञत्वादिसाधकप्रमाणव्याकोपः । जीवस्य वेश्वरगुणकत्वे संसारित्वबाधान्नित्यमुक्तत्वापत्तौ तस्य श्रेयस्साधनविधायिशास्त्रमनर्थकमापद्येतेत्यर्थः ॥ २३ ॥

**नोपासनापरं वाक्यं प्रतिमास्वीशबुद्धिवत् ।**
**न चौपचारिकं वाक्यं राजवद्राजपूरुषे ॥ २४ ॥**
**जीवात्मना प्रविष्टोसावीश्वरः श्रूयते यतः ।**

८ नाप्यष्टम इत्याह—नोपासनापरमिति ॥ वेदोपासीतेत्येतदादिक्रियान्वयाभावात्, उपासनाप्रकरणपाठाभावात्, असीतिपदसमभिव्याहरेण स्वरूपमात्रपर्यवसाननिश्चयात्, क्रियान्तराध्याहारानुपपत्तेश्च नोपासनापरमपीदं वाक्यमित्यर्थः॥

९ नवममुपचारपक्षं प्रतिक्षिपति—न चौपचारिकमिति ॥ पुनःपुनः परिचोदनापूर्वकं नवकृत्वोभ्यासस्य उपचारपक्षेऽसङ्गतेः, न ह्युपचारप्रयोगेप्याक्षेपाद्यवकाश इत्यतो नोपचारपरमपीदमित्यर्थः ॥ २४ ॥

तृतीयादिषु समस्तपक्षेषु साधारणं दूषणमाह—जीवात्मनेति ॥ प्रवेशश्रुतिशतेन ईश्वरस्यैव सङ्घातप्रवेशवशाज्जीवत्वव्यपदेशभाक्त्वं न ततोर्थान्तरं जीव इति निश्चये सति स्तोतृस्तोतव्यत्वादिभेदकल्पनानवकाशात् प्रकारान्तरासम्भवे सति जीवत्वाभिमतस्यात्मनः उपाधिकृतजीवत्वापोहेन तस्य स्वाभाविकब्रह्मत्वबोधकमेवेदं वाक्यमित्यर्थः ॥

**देहेन्द्रियमनोबुद्धिप्राणाहङ्कारसंहतौ ॥ २५ ॥**
**आत्मसङ्कलनादज्ञैरात्मत्वं प्रतिपाद्यते ।**
**वह्निधीः काष्ठलोहादौ वह्निसङ्कलनादिव ॥ २६ ॥**

ननु ब्रह्म चेत्सर्वस्यात्मा तर्हि कथमहं ब्रह्मेति नित्यमात्मा न प्रतिभासते, मनुष्योहमित्याद्यात्मनैव कस्मात्प्रतिभासत इत्याशङ्क्योपाध्यविवेकनिबन्धनभ्रमवशादित्यभिप्रेत्य उपाध्यपोहेन त्वम्पदार्थशोधनप्रकारमारभते–देहेन्द्रियेत्यादिना॥ अज्ञैरज्ञानावृतनिजतत्त्वैर्जीवैर्देहादीनां संहतौ सङ्घाते आत्मसङ्कलनादात्मचैतन्यव्यापनात्, आविर्भावादिति यावत्, आत्मत्वं प्रतिपाद्यते सङ्घात आत्मेति ज्ञायते न ब्रह्मेत्यर्थः। उक्तेर्थे बुद्धिसाम्यार्थं दृष्टान्तमाह—वह्निधीरिति ॥२५॥२६॥

देहमन्नमयं कोशमाविश्यात्मा प्रकाशते।
स्थूलो बालः कृशः कृष्णो वर्णाश्रमविकल्पवान् २७
प्राणकोशेपि जीवामि क्षुधितोस्मि पिपासितः।
संशितो निश्चितो मन्ये इति कोशे मनोमये ॥२८॥
विज्ञानमयकोशस्थो विजानामीति तिष्ठति।
आनन्दमयकोशाख्ये त्वहङ्कारे पुरा कृतैः ॥ २९ ॥
पुण्यैरुपासनाभिश्च सुखितोस्मीति मोदते।

इदानीं स्थूलारुन्धतीदर्शनन्यायेन मुञ्जादिषीकाग्रहणन्यायेन वान्तरात्मनः सूक्ष्मस्योद्धरणप्रकारमाह—देहमन्नमयं कोशमिति॥ अयमर्थः–अहमवभासो हि प्रत्यगात्मानमवगाहत इत्यविवादम्। स च स्थूलत्वादिभिर्दृश्यधर्मैर्विशिष्टविषये वर्तमानो न शुद्धम् आत्मानमवगाहते। अतः परिच्छिन्नो जीवात्मा कथं व्यापकः परमात्मा भवितुमर्हतीत्यसम्भावना जायते। ततश्चाहङ्कारगृहीतस्येदमंशविशिष्टस्याहङ्कारसाक्षित्वेनेदमंशप्रहाणेनोद्धरणे सत्यहङ्कारनिरपेक्षः स्वयम्प्रकाशमान आत्मा शुद्धः परिपूर्णः परमात्मैवेति ज्ञातुं शक्यत इति।

( उद्धरणप्रकारमाह )—तत्रान्नमयः प्राणमयो मनोमयो विज्ञानमय आनन्दमय इति पञ्चकोशाः अहमवभासविषयतया प्रसिद्धाः । तेभ्योन्यः तत्साक्षी प्रत्यगात्मेति शुद्धः आत्मा निर्विशेषः सिध्यति। कथम् ?। स्थूलोहं ब्राह्मणोहं ब्रह्मचार्यहमिति विशिष्टविषयोहङ्कारोतिबहिष्ठः॥२७॥क्षुधितोस्मि पिपासित इति प्राणधर्मविशेषविषयः ततोभ्यन्तरः । उपलक्षणमेतत् पश्यामि शृणोमीत्यादीन्द्रियधर्मवैशिष्ट्यविषयत्वस्य । संशितः संशयवान् निश्चयवानस्मीति मनोधर्मविशिष्टात्मविषयः प्राणमयादप्यान्तरो मनोमयकोशावगाही॥२८॥ अहमिदं जानामि करोमि चेत्येवमादिप्रकारेण मनसोप्यभ्यन्तरं विज्ञानमयकोशमवगाहते । येनाहङ्कारेणात्मचैतन्यखचितेनेतरकोशाः अवभास्यन्ते सोहङ्कारः आनन्दमयकोशः, तस्मिन् आनन्दमयकोशाख्ये । तस्य विज्ञानमयकोशान्तर्गतस्यानन्दमयत्वे सुखविशेषावयवत्वं निमित्तमाह—पुरा कृतैः पुण्यैरुपासनाभिश्चेति ॥

**एवं कञ्चुकितः कोशैः कञ्चुकैरिव पञ्चभिः ॥३०॥**
**परिच्छिन्न इवाभाति व्याप्तोपि परमेश्वरः ।**

एवं कोशपञ्चकमनूद्य तत्कृतपरिच्छेदव्युदासेन तदनुस्यूतसाक्षिरूपात्मा स्वयं परिपूर्णत्वादीश्वर एवेत्यात्मतत्त्वमावेदयति—एवं कञ्चुकित इति ॥

**यथा सलिलमाविश्य बहुधा भाति भास्करः ॥३१॥**
**तथा शरीराण्याविश्य बहुधा स्फुरतीश्वरः ।**

तदेवमात्मनः परिच्छेदावभासस्योपाधिनिबन्धनत्वात् स्वतोपरिच्छिन्नः परमात्मैवेति प्रतिपाद्य तस्य प्रतिशरीरं भेदप्रतिभासोप्युपाधिनिबन्धनो न स्वत इत्येतद्दृष्टान्तेनोप-

पादयति—यथा सलिलमिति ॥ यथा बहुषु जलभाजनेषु प्रतीयमानस्य भानुबिम्बस्य जलोपाधिपरामर्शमन्तरेण स्वतो भेदो न निरूपणपथमवतरति ॥२९॥३०॥३१॥, तथानेकेषु देहेषु स्फुरतः आत्मबिम्बस्यापि देहोपाधिपरामर्शमन्तरेण स्वतो भेदो न निरूपणपथमर्हति। अतः सर्वशरीरेषु परमार्थत एक एवात्मा परिपूर्णश्चेति सिद्धम्। एतेनेदमपि निरस्तं-, यदाहुः— एकात्मत्वपक्षे एकस्मिन् सुखिनि सर्वे सुखिनस्स्युरित्यादि। जलगतप्रतिबिम्बानामन्यतमे कम्पनादिमत्तया विभाव्यमानेप्यन्येषां तद्वत्ताया अभावस्य निश्चयात् यथा धर्मव्यवस्था एवं जीवेष्वपि व्यवस्थोपपत्तेः। जीवेश्वरयोरेकत्वेपि धर्मभेदव्यवस्थाया अयमेव दृष्टान्तः, यथा प्रतिबिम्बे चलनादिमति न भानुश्चलनादिमान् भवति, एवं जीवे कर्तृत्वादिसंसारधर्मवत्तया भासमानेपि न परमात्मा तद्धर्मवान् भवतीति ॥

**कारणत्वं च कार्यत्वं तटस्थं लक्षणं तयोः ॥ ३२ ॥**
**शाखायां चन्द्र इतिवन्नैव मुख्यमिदं मतम्।**

तदेवमात्मनः परिच्छिन्नत्वमनेकत्वमीश्वरादन्यत्वं चोपाधिवशात् प्रतिभासते, न वस्तुतस्तत्रैते धर्माः सन्तीति प्रतिपाद्येदानीं जीवेश्वरयोस्तटस्थस्वरूपलक्षणप्रदर्शनद्वारा तयोरैक्यस्य वाक्यार्थत्वयोग्यतां सम्भावयति—कारणत्वमित्यादिना ॥ तयोस्तत्त्वमर्थयोः। कारणत्वं तत्पदार्थस्य तटस्थलक्षणं,कार्यत्वं त्वम्पदार्थस्येति योज्यम्। तथा च श्रुतिः—'कार्योपाधिरयं जीवः कारणोपाधिरीश्वरः' इति। भूतभौतिकप्रपञ्चकारणत्वं तत्पदार्थोपलक्षणं, देहेन्द्रियादिस-

१. महानारायणोपनिषदि ४ र्थाध्याये।

ज्ञातरूपकार्याध्यक्षत्वं त्वम्पदार्थोपलक्षणमित्यर्थः ॥ ३२ ॥
उक्तलक्षणमिदमुभयोस्सद्भावसम्भावनामात्रहेतुः, न स्वरूपपर्यवसायीत्येतद्दृष्टान्तेन स्पष्टयति—शाखायामिति ॥

**महाप्रकाशमित्युक्तं स्वरूपं चन्द्रलक्षणम् ॥ ३३ ॥**
**सच्चिदानन्दरूपत्वं स्वरूपं लक्षणं तयोः ।**

स्वरूपपर्यवसायि लक्षणं सदृष्टान्तमाह—महाप्रकाशमिति ॥ यथा प्रकृष्टप्रकाशश्चन्द्र इति चन्द्रस्वरूपलक्षणं, नैतद्विशिष्टार्थपरं, चन्द्रप्रातिपदिकार्थमात्रबुभुत्सया कृतप्रश्नस्योत्तरत्वेनास्य प्रवृत्तेः; वैशिष्ट्यपरत्वे अबुभुत्सितार्थविषयपरत्वेनानवधेयवचनतापत्तेः । यः प्रकृष्टप्रकाशः स चन्द्र इति निर्देशे यत्तच्छब्दयोः सामानाधिकरण्येनैकार्थत्वनियमात् प्रकृष्टप्रकाशचन्द्रपदयोः स्वरूपमात्रपर्यवसानस्यावश्यम्भावाच्चन्द्रस्वरूपलक्षणमखण्डचन्द्रप्रातिपदिकार्थमात्रं बोधयतीति युक्तम् ॥३३॥ तथा च तयोस्तत्त्वम्पदार्थयोः सच्चिदानन्दरूपत्वं स्वरूपलक्षणम्, अनृतजडदुःखपरिच्छेद्यविरोधिसच्चिदानन्दानन्तरूपता तत्त्वम्पदार्थस्वरूपमित्यर्थः ॥

**एकलक्षणयोरैक्यं वाक्येन प्रतिपाद्यते ॥ ३४ ॥**

तथा च कार्यकारणलक्षणोपाधिद्वयप्रहाण्या विरोधाभासे बाधिते सति सच्चिदानन्दानन्तस्वभावमात्रे भेदलेशस्याप्यभावादेकलक्षणयोगित्वेनैकवाक्यार्थप्रतिपत्तियोग्यतानयोर्युक्तेति वाक्यार्थमाह—एकलक्षणयोरिति ॥ ३४ ॥

**तस्मादेकप्रकाशत्वं सर्वात्मत्वमिति स्थितम् ।**

एतावता 'साक्षात्तत्त्वमसीति वेदवचसा' इति द्वितीयः पादो व्याख्यातः । इदानीमुक्तवाक्यार्थतत्त्वमनूद्य तृतीयं

पादं व्याचष्टे—तस्मादित्यादिना ॥ एकप्रकाशत्वम्, एकत्वं प्रकाशत्वं च, एकरूपप्रकाशत्वमिति वा । इदमेव सर्वात्मत्वं 'तदात्मानमेवावेदहं ब्रह्मास्मीति तस्मात्तत्सर्वमभवत्'[1] इति श्रुतौ उक्तं, नानेकरूपापत्तिः, इति स्थितं निश्चितमित्यर्थः ॥

देवतिर्यङ्मनुष्याणां प्रकाशान्न पृथक्स्थितिः॥ ३५॥
जीवप्रकाशाभिन्नत्वात्सर्वात्मेत्यभिधीयते ।

कथमेतन्निश्चीयते देवमनुष्यादिभेदस्य विद्यमानत्वादित्याशङ्क्य प्राक्, प्रतिपादितमर्थं ज्ञापयति—देवेति॥३५॥जीवोपि परमेश्वरप्रकाशात्मपृथक्स्वरूपाभावात् सर्वात्मेत्याह—जीवेति ॥

एवं प्रकाशरूपत्वपरिज्ञाने दृढीकृते ॥ ३६ ॥
पुनरावृत्तिरहितं कैवल्यं पदमश्नुते ।

एवं वाक्यार्थतत्त्वमनूद्य तद्विज्ञानफलमाह—एवं प्रकाशेति ॥

सकृत्प्रसक्तमात्रोऽपि सर्वात्मत्वे यदृच्छया ॥ ३७ ॥
सर्वपापविनिर्मुक्तः शिवलोके महीयते ।

एवं जीवब्रह्मणोरेकत्वज्ञानमाहात्म्यं कैमुतिकन्यायेनाह——सकृदिति । यदृच्छया प्राचीनपुण्ययोगेनाकस्मिकतद्विषयमतिप्राबल्येन सर्वात्मत्वे ॥३६॥३७॥ सकृत्प्रसक्तमात्रोपि पुमान् सर्वपापविनिर्मुक्तः शिवलोके महीयते पूज्यते, शिववत्पूज्यो भवतीत्यर्थः । सर्वभावधिनिर्मुक्त इति पाठे तु सर्वविषयभावनाविनिर्मुक्त इत्यर्थः ॥

---

१ बृह. ३-४-१० ।

**सर्वात्मभावना यस्य परिपक्वा महात्मनः ॥ ३८ ॥**
**संसारतारकः साक्षात्स एव परमेश्वरः ।**

सकृत्सर्वात्मेश्वरभावावगमस्य चेदृशं फलं, तदभ्यासस्य दृढतायां सकारणसंसारनाश इति किमु वक्तव्यमित्याह—सर्वात्मभावना यस्येति ॥

**इति श्रीदक्षिणामूर्तिस्तोत्रार्थप्रतिपादके ॥ ३९ ॥**
**प्रबन्धे मानसोल्लासे तृतीयोल्लाससङ्ग्रहः ॥**

तृतीयश्लोकव्याख्यामुपसंहरति ॥ इतीति ॥ ३८ ॥ ३९ ॥

इति मानसोल्लासवृत्तान्ते तृतीयोल्लासःसमाप्तः ॥ ३ ॥

---

**स्वतःसन्तः प्रकाशन्ते भावा घटपटादयः ।**
**नेश्वरस्य समावेशादित्यस्योत्तरमुच्यते ॥ १ ॥**

तदेवं त्रिभिःश्लोकैः तत्त्वम्पदार्थौ संशोध्य तदैक्यं वाक्यार्थः प्रतिपादितः । एष सर्ववेदान्तानां समन्वयः प्रथमः शास्त्रार्थो दर्शितः । इदानीमुक्ते समन्वयार्थे ब्रह्मात्माऽद्वैते तत्त्वे विरोधशङ्कां प्रत्यक्षादिप्रमाणाभासनिबन्धनां वादिमतिविलासनिबन्धनां च प्रतिक्षिप्य तमेवोक्तं समन्वयार्थं दृढीकर्तुमुत्तरश्लोकत्रयं प्रववृते । तत्र—

आत्मसत्तैव सत्तैषां भावानां न ततोधिका ।
तथैव स्फुरणं चैषां नात्मस्फुरणतोधिकम् ॥

इति यदुक्तं पूर्वं सर्वभावानां स्वतस्सत्तास्फुरणराहित्यं, तदनुभवविरुद्धं, घटोस्ति घटःस्फुरतीति चानुभवात् बाधादर्शनाच्चेति प्रथममाशङ्कते—स्वतः सन्त इति ॥ स्वत एव

१. मा, उ. ३—३ ।

सन्तः स्वत एव प्रकाशन्ते, नेश्वरस्य समावेशात् तस्यादर्शनात्, तत्कल्पनायां प्रमाणाभावाच्चेति । अस्याक्षेपस्योत्तरत्वेन उत्तरश्लोकमवतारयति—अस्योत्तरमुच्यत इति ॥ १ ॥

**"नानाच्छिद्रघटोदरस्थितमहादीपप्रभाभास्वरं
ज्ञानं यस्य तु चक्षुरादिकरणद्वारा बहिः स्पन्दते ।
जानामीति तमेव भान्तमनुभात्येतत्समस्तं जगत्
तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥४॥"**

नाना अनेकानि छिद्राणि यस्मिन् स नानाच्छिद्रः स चासौ घटश्चेति तथा, तस्योदरे मध्ये स्थितो यो महादीपोऽक्षुद्रदीपः तस्य प्रभावत् भास्वरमनन्याधीनालुप्तप्रकाशस्वरूपम्, यस्य चिदात्मनोऽनेकच्छिद्रवति देहे स्थितस्य ज्ञानं स्वरूपभूतं चक्षुरादिकरणद्वारा तत्तदिन्द्रियच्छिद्रमार्गेण बहिः विषयेषु रूपादिषु स्पन्दते गच्छति । यथा घटच्छिद्रेभ्यो विप्रसृताः दीपप्रभास्तत्सन्निहितान्विषयान् प्राप्य तदाकाराः सत्यः तद्गततमः अभिभवन्ति, तथा देहच्छिद्रगतेन्द्रियद्वारा प्रसरन्मनोवृत्त्यवभासकतया तदात्मकतामापन्नानि चिदात्मस्वरूपाणि ज्ञानानि स्फुरणस्वभावानि तत्तदर्थं प्राप्य तदाकाराकारितानि विषयगताज्ञाततामभिभवन्ति, विषयप्रकाशशब्दवाच्यानि भवन्तीत्यर्थः । यस्य ज्ञानमेवम्प्रकारेण बहिः स्पन्दते तस्मै...इति सम्बन्धः । उक्तमर्थं श्रुत्या द्रढयति—जानामीति । अहमिदं जानामीति स्वगतेन निरपेक्षप्रकाशरूपेण विषयमवभासयन् यः स्वयमेव भासते तमेव भान्तं प्रकाशमानम् अनु अनुसृत्य एतत्समस्तं जगत् भाति, न स्वत इत्यक्षरयोजना । तथा च श्रुतिः—'न तत्र

सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोयमग्निः'इति सर्वप्रकारप्रकाशविषयत्वोक्त्या स्वप्रकाशत्वं प्रत्यग्ब्रह्मणः उपपाद्य 'तमेव भान्तमनु भाति सर्वं तस्य भासा सर्वमिदं विभाति' इति भासमानात्मप्रकाशानुविद्धमेतत्सर्वं जगदवभासत इति निर्धारयति। तथा चैतत् समस्तं जगदग्निं दहन्तमयो ददतीतिवद्यं भान्तमनु सर्वं भातीत्युच्यते, तदेवैकं सर्वविषयभानं, न पुनर्विषयेषु भानान्तरं स्वतः परतो वोपपद्यत इति तात्पर्यार्थः ॥ ४ ॥

## अस्यायं भावः—

श्लोकव्याख्यां प्रतिजानीते—अस्यायं भाव इति ॥

**अहमित्यनुसन्धाता जानामीति न चेत्स्फुरेत्।**
**कस्य को वा प्रकाशेत जगच्च स्यात्सुषुप्तवत् ॥२॥**

तत्र 'जानामीति तमेव भान्तम्' इति तृतीयपादभावार्थं वर्णयन् ईशसंसर्गं विना विषयसत्तास्फुरणयोरङ्गीकारे बाधकं वक्तुमीशस्य स्वप्रकाशसद्रूपतां साधयति—अहमित्यनुसन्धातेति ॥ जानामीत्यनुसन्धाता अहमिति न चेत् स्फुरेदिति सम्बन्धः। यद्वा—जानामीत्यस्मिन्नवभासे अहमित्यनुसन्धाता चेन्न स्फुरेदिति सम्बन्धः, तदा जगदान्ध्यं प्रसज्येतेत्युत्तरार्धार्थः॥ एतदुक्तं भवति—विषयाः यदि स्वत एव प्रकाशेरन्, तदाहं जानामीति ज्ञानाश्रयत्वेन विषयानुसन्धातुः स्फुरणं न स्यात्। तदभावे च शिलाघनपिहितगुहागतप्रदीपवन्मया विदितोयमिति कस्यापि नावभासेत। तथा च, सुषुप्ताविवाप्रकाशमानस्य जगतः स्फुरणाभावात् न तद्व्यवहारप्रसङ्ग इत्यतोन्याधीनस्फुरणं जगतोभ्युपेयम्। य-

---

१, २ मुण्ड. २-२-१०।

दधीनश्चास्य प्रकाशः स नित्यप्रकाशरूप एवाऽऽस्थेयः, तस्यापि प्रकाश्यत्वेनवस्थाप्रसङ्गादिति ॥ २ ॥

**प्रागूर्ध्वं चासतां सत्त्वं वर्तमानेपि न स्वतः ।**
**तस्मादीशे स्थितं सत्त्वं प्रागूर्ध्वत्वविवर्जिते ॥ ३ ॥**

विषयाणां प्रकाशवत् सत्त्वमपि पराधीनमित्यत्र युक्तिमाह ॥ यद्वा—विषयाणामनन्याधीनप्रकाशत्वे विषयत्वानुपपत्तिप्रसङ्गमापाद्यानन्याधीनसत्तायामपि तमापादयति—प्रागूर्ध्वं चेति । विमता भावाः, न स्वतः । सत्तावन्तः, कदाचिदेवोपलभ्यमानत्वात्, शुक्तिरजतादिवदित्यर्थः । तथा च प्रकाशवत् सत्ताप्यन्याधीना भावानामिति सिद्धमित्याह—तस्मादिति । अनन्याधीनसत्तावत्त्वेस्यात्मवदनन्याधीनप्रकाशत्वापत्तौ विषयत्वानुपपत्तिरिति । ईश्वरस्य तु न प्रागूर्ध्वं चासत्त्वशङ्का अप्रकाशत्वशङ्का वा स्यात्, सर्वभावानामागमापायावधित्वेन तस्य सदा सत्त्वात्, सर्वावस्थसाक्षिप्रत्यगात्मरूपेण सदा प्रकाशमानत्वाच्चेति भावः ॥ ३ ॥

**स्वयमेव प्रकाशेरन् जडा यदि विनेश्वरम् ।**
**सर्वं सर्वस्य भासेत न वा भासेत किञ्चन ॥ ४ ॥**

विषयत्वान्यथानुपपत्त्यैवेश्वराधीना सत्ता स्फुरत्ता च विषयाणामास्थेयेत्युक्तम् । इदानीं तदेव स्फुटयति—स्वयमेवेति ॥ विनेश्वरमिति । स्वतस्सिद्धप्रकाशस्वग्राहकमनपेक्ष्येत्यर्थः ॥ ४ ॥

**तस्मात्सर्वज्ञमज्ञं वा जगत्स्यादेकरूपकम् ।**
**तुल्ये स्वयम्प्रकाशत्वे जडचेतनयोर्मिथः ॥ ५ ॥**
**तुल्यमेव प्रसज्येरन् ग्राह्यग्राहकतादयः ।**

सर्वं सर्वस्य भासतां मा वा भासिष्ट, किं तत इति चेत्तत्राह—तस्मात्सर्वज्ञमिति ॥ यदि सर्वं सर्वस्य सदा भासेत, तदा सर्वः सर्वज्ञः स्यात्। यदि नैवं भासेत, तदा सर्वोप्यज्ञस्यादिति योजना ॥ ५ ॥

विषयाणामप्यात्मवत् स्वयम्प्रकाशत्वे दूषणान्तरमाह—तुल्य इति ॥

**इन्द्रियाणामनियमाच्चाक्षुषाः स्यू रसादयः ॥ ६ ॥**

ग्राह्यग्राहकव्यवस्थानङ्गीकारे दोषमाह—इन्द्रियाणामिति ॥ सर्वस्य सर्वग्राह्यत्वे सर्वग्राहकत्वे चक्षुरपि रसादिग्राहकं स्यात् रसादयोपि चक्षुर्ग्राहकाः स्युरित्यर्थः। तस्माद्विषयविषयिव्यवहारनियमस्य सर्वप्रकाशकत्ववादे विरोधप्रसङ्गात्, स्वतस्सत्तायां विषयाणां स्वरूपाव्यभिचारित्वप्रसङ्गात्। अन्याधीनसत्तास्फूर्तिकाः विषयाः। अन्यश्च स्वतस्सत्तास्फुरणवानीश्वर एव नान्य इति सिद्धमिति पर्यवसितोर्थो बोद्धव्यः ॥ ६ ॥

**मलिनामलिनादर्शपश्चात्प्राग्भागतुल्ययोः।**
**क्रियाशक्तिज्ञानशक्त्योरन्तःकरणभागयोः ॥ ७ ॥**
**प्रतिबिम्बे स्फुरन्नीशः कर्ता ज्ञातेति कथ्यते।**

नन्वीश्वरो भावेषु सत्ताप्रकाशयोर्व्याप्रियते? न वा?। न चेत्, न सत्ता भावानामीष्टे, सन्निदधतोप्याकाशवदकिञ्चित्करत्वात्। व्याप्रियते चेत्, विकारित्वापत्तौ अनित्यत्वादनीश्वरत्वप्रसङ्ग इति चेत्—नायं दोषः, स्वतो निर्व्यापारत्वादुपाध्यायत्तव्यापारवत्त्वाचेति मत्वा कर्तृत्वंज्ञातृत्वे ईश्वरस्योपपादयति—मलिनामलिनेति ॥ मलिनश्चामलिनश्च मलिनामलिनौ। आदर्शस्य पश्चात्प्राग्भागौ मलिनामलिनौ। मलिनामलिनौ

च तावादर्शपश्चात्प्राग्भागौ चेति तथा, तत्तुल्ययोरिति विग्रहः । एवंविधयोः क्रियाशक्तिज्ञानशक्त्योरन्तःकारणस्य भागयोः क्रियाशक्तिरूपो भागः प्राणः; स आदर्शस्य मलिनपश्चाद्भागतुल्यः; ज्ञानशक्तिर्मनोबुद्ध्यात्मको भागः; स आदर्शामलिनप्राग्भागतुल्य इति विवेकः। भागयोरिति सप्तमीद्विवचनम्। तयोः ॥७॥-प्रतिबिम्बः प्रत्यगात्मनः प्रतिच्छाया। तस्मिन् प्रतिबिम्बाभेदेन स्फुरन्नीशः आत्मा कर्ता ज्ञातेति च कथ्यते । व्यापारवत्प्राणोपाधिः सत्तास्फूर्तिप्रदत्वेनानुगम्यमानः चिदात्मा करोतीति व्यपदिश्यते । परिणममानमनआद्युपाधिः सत्तास्फूर्तिप्रदत्वेनानुगम्यमानो जानातीति व्यपदेशभाग्भवतीत्यर्थः ॥

बुद्धिः सत्त्वगुणोत्कर्षान्निर्मलो दर्पणो यथा ॥ ८ ॥
गृह्णाति विषयच्छायामात्मच्छायानुभावतः ।

आत्मनो ज्ञातृतोपाधिज्ञानशक्तिरन्तःकरणमित्युक्तं प्रपञ्चयति—बुद्धिरिति ॥ बुद्धिः स्वगतात्मच्छायानुभावतो विषयच्छायां गृह्णातीति सम्बन्धः । तत्र हेतुः—सत्त्वगुणोत्कर्षादिति । रजस्तमसोरुद्रेके लोभप्रमादादयो जायन्ते, तन्मा भूदिति सत्त्वोत्कर्षादित्युक्तम् । तथा च भगवानाह—

'सत्त्वात्संजायते ज्ञानं रजसो लोभ एव च ।
प्रमादमोहौ तमसो भवतोऽज्ञानमेव च' इति ॥

अन्तःकरणसम्बन्धान्निखिलानीन्द्रियाण्यपि ॥ ९ ॥
रथाङ्गनेमिवलये कीलिता इव कीलकाः ।

---

१भ. गी.— १४-१७

इन्द्रियेषु विषयग्रहणोपाधिषु सत्सु किं बुद्ध्येत्याशङ्क्य तेषामपि तया विना नोपलब्धिसाधनत्वमित्यभिप्रेत्याह— अन्तःकरणसम्बन्धादिति ॥ स्वभावतो बहिर्मुखप्रवृत्ताना-मिन्द्रियाणामपि प्रवृत्त्यङ्कुशाभावे विषयनियमाभावादन्तः-करणवृत्तेस्तन्नियामकता वक्तव्या । तथा च रथाङ्गस्य रथच-क्रस्य नेमिसंज्ञे वलये कीलिताः अर्पिताः कीलकाः अरा इव स्वस्वविषयेषु निखिलान्यपीन्द्रियाणि अन्तःकरणेन नेमि-स्थानीयेन नियामकेन सम्बन्धादर्पितानि भवन्तीत्यर्थः ॥

**नाड्योन्तःकरणे स्यूता जालसंस्यूतसूत्रवत्॥१०॥**
**ताभिस्तु गोलकान्ताभिः प्रसर्पन्ति स्फुलिङ्गवत् ।**
**करणानि समस्तानि यथास्वं विषयं प्रति ॥ ११ ॥**

इदानीं देहान्तरानुप्रविष्टतया जीवभावमापन्नस्योक्तोपा-धिद्वारावस्थात्रययोगं वदिष्यन्तदनुभवसंचारस्थानमादौ प्रपञ्चयति—नाड्य इत्यादिना ॥ नाड्यो देहान्तरालगताः सिराः अन्तस्सुषिराः स्नाय्वाख्याः । ताः अन्तःकरणे ज्ञान-क्रियाशक्तिसम्मूर्च्छिते लिङ्गे स्यूताः ग्रथिताः । तत्र दृष्टान्तः —जालसंस्यूतसूत्रवदिति । यथा मत्स्यावरोधसाधनं जालं प्रसिद्धं, तत्र सम्यक्प्रोतानि सूत्राणि परस्पराविनाभूतानि, तथा सर्वविषयावरोधसाधने वृत्तिमदन्तःकरणे नाड्यः प्रोता वर्तन्त इत्यर्थः ॥८॥९॥१०॥ ताभिर्नाडीभिः द्वारभूताभिः पूर्वोक्तानि करणानि समस्तानीन्द्रियाणि मनोवृत्तिभिः सह यथास्वं विषयं प्रति प्रसर्पन्ति सञ्चरन्ति । कियत्पर्यन्ताभिरिति—उच्यते— गोलकान्तादिभिरिति । इन्द्रियायतनमिन्द्रियाभिव्यक्तिस्थानं देहदेशविशेषरूपं गोलकं, तत्पर्यन्ताभिर्नाडीभिः प्रसर्पन्ती-त्यर्थः । स्फुलिङ्गवदिति दृष्टान्तः स्पष्टः । गोलकान्तानीति

पाठे करणविशेषणं, सुषुप्तेर्जागरितं प्रत्यागमनं गोलकान्तपर्यन्तं भवतीत्यर्थः ॥ ११ ॥

**देहस्य मध्यमं स्थानं मूलाधारमितीर्यते ।**
**गुदात्तु द्यङ्गुलादूर्ध्वं मेढ्रात्तु द्यङ्गुलादधः ॥ १२ ॥**

नाडीद्वारेन्द्रियाणि सञ्चरन्तीत्युक्तं, तत्र का नाड्यः, कियन्त्यः, किम्परिमाणा इति जिज्ञासायामाह— देहस्येति ॥ मध्यमं स्थानं मध्यमदेहदेशः । तदेव विशिष्य निर्दिशति— गुदादिति । गुदं पायुः । मेढ्रं शिश्नः ॥ १२ ॥

**त्रिकोणोधोमुखाग्रश्च कन्यकायोनिसन्निभः ।**
**यत्र कुण्डलिनी नाम परा शक्तिः प्रतिष्ठिता ॥ १३ ॥**
**प्राणाग्निबिन्दुनादानां सवित्री सा सरस्वती ।**

तस्य मूलाधारस्य लक्षणमाह—त्रिकोण इति ॥ तदेव सादृश्योक्त्या बुद्धिमारोहयति—कन्यकेति । तस्याधिष्ठात्रीं देवतां नामगुणाभ्यां निरूपयति—यत्रेति । परा शक्तिः मूलप्रकृतिः, सा तत्र स्थिता सर्पकुण्डलाकारा कुण्डलिनीसंज्ञिता परा । आत्मतेजसा दीप्ता सती प्राणादीनां सवित्री प्रसवित्री । प्राणः पञ्चवृत्तिको देहान्तस्संचारी वायुविशेषः । अग्निः कोष्ठगतोष्मरूपोन्नरसादीनां पाचकः । एतौ प्राणाग्नी अग्नीषोमौ चन्द्रसूर्याविति च योगशास्त्रे प्रसिद्धौ । तत्र प्राणश्चन्द्रमाः सोम इति चोच्यते, अग्निः सूर्य इति । एतौ च वक्ष्यमाणेडापिङ्गलयोर्देवते । बिन्दुरव्यक्तरूपो ध्वन्यवस्थाविशेषः । नादस्तु सर्ववर्णसाधारणः ओंकारो घोषात्मा, यं कर्णावपिधाय शृण्वन्ति । एतेषां प्रसवः सञ्चारः, तत्कर्त्री परा शक्तिः देहमध्यस्थिता कुण्डलिनीत्यर्थः । सा प्राणघो-

षावस्थां प्राप्य वर्णात्मनाभिव्यज्यमाना सरस्वतीत्युच्यते ॥

मूलाधाराग्रकोणस्था सुषुम्ना ब्रह्मरन्ध्रगा ॥ १४ ॥
मूलेऽर्धच्छिन्नवंशाभा षडाधारसमन्विता ।

एवं वक्ष्यमाणमहानाडीत्रयस्य मूलाधारं सोपस्करं ध्यानायोपदिश्य इदानीं ततो मध्यनाडीनिर्गममुपदिशति—मूलाधाराग्रकोणस्थेति ॥ मूलाधारस्य हि कोणत्रयमुक्तम् । तत्राग्रकोणस्था अग्रकोणः अधःकोणः मुखं, तत्र स्थिता अभिव्यज्य आस्थिता, जातेति यावत् । सुषुम्नाख्या नाडी च सा ब्रह्मरन्ध्रं शिरःकपालच्छिद्रं, तत्पर्यन्तं गता, एकरूपातिदीर्घा ऋज्वी चेत्यर्थः ॥ १३ ॥ १४ ॥ तस्याः योगिगम्यं लक्षणमाह–मूल इति । अर्धच्छिन्नवंशवदवभासमाना मूले सूक्ष्मरन्ध्रेत्यर्थः । षड्भिराधारैरुत्तम्भकैः समन्विता, मूलाधारस्वाधिष्ठानमणिपूरकानाहतविशुद्धाज्ञाख्यैराधारैः क्रमेण चतुष्षड्दशद्वादशषोडशद्विदलकमलमयैर्मूलाधारलिङ्गनाभिहृदयकण्ठभ्रूमध्यदेशगतैः समन्वितेत्यर्थः ॥

तत्पार्श्वकोणयोर्जाते द्वे इडापिङ्गले स्थिते ॥ १५ ॥
नाडीचक्रमिति प्राहुस्तस्मान्नाड्यः समुद्गताः ।

सुषुम्नासन्निहितं नाडीद्वयमाह—तत्पार्श्वेति ॥ तस्याः सुषुम्णायाः पार्श्वयोः यौ द्वौ कोणौ मूलाधारस्य त्रिकोणस्य दक्षिणोत्तरावुपरिभागौ तयोर्जाते निर्गते इडापिङ्गले नाड्यौ स्थिते । वामपार्श्वे इडा, दक्षिणपार्श्वे पिङ्गलेत्यूह्यम् । एते च ललाटमूलपर्यन्तं प्रसृते इति ज्ञेयम् ॥ १५ ॥ उक्तं नाडीत्रयसन्निवेशलक्षणं नाडीचक्रमिति आहुर्योगशास्त्रविद इति शेषः ।

तस्मान्नाड्यो वक्ष्यमाणाः समुद्गताः विभक्ताः जायन्त इत्यर्थः ॥

गान्धारीहस्तिजिह्वाख्ये नयनान्तं प्रधावतः॥१६॥
नाडीचक्रेण संस्यूते नासिकान्तमुभे गते ।

एता एव नाडीः प्रधानतो नामभिर्निर्दिशति—गान्धारीत्यादिना ॥ आधारचक्रान्निर्गते नयनगोलकान्तं प्रसृते इत्यर्थः । एते गान्धारीहस्तिजिह्वाख्ये यदा नाडीचक्रेण पूर्वोक्तेन संस्यूते ग्रथिते भवेतां, तदा उभे एते नासिकान्तं गते भवतः। इडापिङ्गळयोर्वायुपूरणेनाध्वोन्नमितावस्थायां ताभ्यामुन्नीयमानाः नाड्यः अन्याः नासिकान्तमुन्नीयन्त इत्यभिप्रायः। यद्वा—गान्धारी हस्तिजिह्वा च द्वे नाड्यौ स्वाधिष्ठानचक्रादुद्गते नाडीचक्रे संस्यूते स्वभावतो नासिकान्तं गते उन्नीयमानदशायां नयनान्तं प्रधावत इति योजना ॥

नाभिमण्डलमाश्रित्य कुक्कुटाण्डमिव स्थितम्॥१७॥
पूषा चालम्बुसा नाडी कर्णद्वयमुपाश्रिते ।
नाडी शुक्लाह्वया तस्माद्भ्रूमध्यमुपसर्पति ॥ १८॥
सरस्वत्याह्वया नाडी जिह्वान्ता वाक्प्रसारिणी ।
नाडी विश्वोदरी नाम भुङ्क्तेऽन्नं सा चतुर्विधम्॥१९॥
पीत्वा पयस्विनी तोयं कण्ठस्था कुरुते क्षुतम् ।

इदानीं नाड्यन्तरोद्गमनस्थानमाह—नाभिमण्डलमिति॥मणिपूरकचक्रस्थानमित्यर्थः।नाभिमण्डलस्योपमा—कुक्कुटाण्डमिवेति॥१६॥१७॥यदाश्रित्य तत्पार्श्वयोरुभयतो निर्गते पूषा चालम्बुसा चेति प्रसिद्धे द्वे नाड्यौ कर्णद्वयमुपाश्रिते,तावत्पर्यन्तं प्रसृते इत्यर्थः।पूषालम्बुसयोरन्तराले तस्मान्नाभिमण्डलादु-

द्गता शुक्लाह्वया नामतो वर्णतश्च शुक्ला नाडी भ्रूमध्यमुपसर्पति ॥१८॥ तत्रैव स्थिता सरस्वत्याह्वया नाडी जिह्वान्तं जिह्वाग्रपर्यन्तं प्रसृता वाचः प्रसारणकर्त्री भवति। अन्या विश्वोदरी नाम नाडी या अस्ति, सा चतुर्विधं लेह्यं चोष्यं भोज्यं भक्ष्यमित्येतत्प्रकारमन्नमदनीयं भुङ्क्ते जाठराग्निना पच्यमानरसं ग्रसति ॥१९॥ पयस्विनी नामान्या नाडी पेयं तोयं पीत्वा कण्ठस्थाने स्थिता सती क्षुतं करुते। विश्वोदरी जठरस्था नाडी, पयस्विनी कण्ठस्था नाडीति ज्ञेया ॥

नाडीचक्रात्समुद्भूता नाड्यस्तिस्रस्त्वधोमुखाः २०
राका शुक्लं सिनीवाली मूत्रं मुञ्चेत्कुहूर्मलम्।

एवमूर्ध्वगाः नाडीः स्वस्वकार्याण्यनुक्रम्य अधोमुखाः। तथा सार्था उपक्रामति—नाडीचक्रादिति ॥ स्पष्टार्थः ॥

भुक्तान्नरसमादाय शङ्खिनी धमनी पुनः ॥ २१ ॥
कपालकुहरं गत्वा मूर्ध्नि संचिनुते सुधाम्।

अन्या पुनश्शङ्खिनी नाम नाडी नाडीचक्रादेव उद्गता धमनी धमनकर्त्री भुक्तान्नानां रसं सारमादाय ॥२०॥२१॥ मूर्ध्नि मस्तके सहस्रारपद्मस्थाने सुधाममृतं संचिनुते सदोपचयं कुरुते, (कपालकुहरमिति) यां लम्बिकायोगलभ्यां मन्यन्ते योगिनः, तामित्यर्थः। किं कृत्वा? कपालकुहरं शिरः कपालाकाशं गत्वा प्राप्येत्यर्थः ॥

शतं चैका च नाड्यस्युस्तासामेका शिरोगता ॥२२
तयोर्ध्वमायन्मुक्तः स्यादिति वेदान्तशासनम्।

किं बहुना? सन्त्यन्याः शतशो नाड्यः प्राणेन्द्रियमनःप्रचारमार्गभूता इत्युपसंहरति—शतं चैका चेति। तासामे-

कोत्तरशतनाडीनां मध्ये एका सुषुम्नाख्या नाडी शिरो ब्रह्मरन्ध्रं प्रति गता ॥२२॥ तस्याः कार्यमाह—तयेति । तया नाड्या ऊर्ध्वमर्चिरादिमार्गेण ब्रह्मलोकं प्रति आयन् गच्छन्मुक्तः स्यात् विमुक्तसंसारबन्धनः स्यात् पुमान्, इति वेदानुशासनं, वेदान्तेषूक्तमित्यर्थः । तथा च वेदान्तवाक्यम्—

'शतं चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिस्सृतैका। तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति' इति॥

**यदा बुद्धिगतैः पुण्यैः प्रेरितेन्द्रियमार्गतः ॥ २३॥**
**शब्दादीन् विषयान् भुङ्क्ते तदा जागरितं भवेत् ।**

इदानीं नाडीभेदतत्स्वभावकार्याद्यनुक्रमणप्रयोजनं चिदात्मनोवस्थात्रययोगोपपत्तिमनुक्रमते—यदा बुद्धिगतैरिति ॥ अयमर्थः—यद्यत्कर्मायसमाचरति जीवः, तदा बुद्धिगतस्वचिदाभासद्वारा तदभिव्यक्त एव करोति न स्वत इति स्थितिः । तथा च कृतसर्वकर्मकृतोतिशयो बुद्धिगत एवेति-बुद्धिगतैः पुण्यैरित्युच्यत इति । एवं बुद्धिगतैः पुण्यैः प्रेरितानि यानीन्द्रियाणि । पुण्यग्रहणं श्रैष्ठ्याभिप्रायं, न तु पापव्यावृत्त्यर्थम्, अकल्याणदर्शनादेरपि दर्शनात्, 'तस्मात्तेनोभयं पश्यति' इत्यादिश्रुतेश्च । तथा च यथादेशकालनिमित्तोद्भवपुण्यपापप्रेरितेन्द्रियमार्गैः पूर्वोक्तनाडीभिस्तत्तदिन्द्रियगोलकस्थानप्रसृताभिः 'देहावकाशात् बहिः प्रसर्पद्भिरिन्द्रियैरिति यावत् ॥२३॥' यदायं चिदात्मा शब्दादिविषयान् देहबाह्यौ आध्यात्मिकांश्च भुङ्क्ते प्रत्यक्षादिभिः प्रमाणैरनुभवति तदास्य जागरितं, जाग्रदवस्था भवेदित्यर्थः । तथा चोक्तम्, 'इन्द्रियैरर्थोपलब्धिर्जागरितम्' इति ॥

---

१. कठो.—६-१६। २. छा. उ. १-३-४।

**संहृतेष्विन्द्रियेष्वेषु जाग्रत्संस्कारजान्पुमान् ॥२४॥**
**मानसान्विषयान्भुङ्क्ते स्वप्नावस्था तदा भवेत् ।**

स्वप्नावस्थाप्राप्तिमाह—संहृतेष्विति ॥ एष्विन्द्रियेषु देहगतनाडीछिद्रेषु उपसंहृतेषु सत्सु, नाडीजालसूत्रेणान्तःकरणेन प्राणसहितेन तत्तद्गोलकस्थानेभ्योन्तर्हितेषु सत्स्वित्यर्थः ॥२४॥ यदा पुमानात्मा मानसान् जाग्रत्संस्कारवासितमनःपरिणामरूपान् विषयान् भुङ्क्ते, तदा स्वप्नावस्था भवेत् । तदप्युक्तं 'करणेषूपसंहृतेषु जागरितसंस्कारजन्यविषयः स्वप्नः' इति ॥

**मनसोप्युपसंहारः सुषुप्तिरिति कथ्यते ॥ २५ ॥**
**तस्मान्मायासमाच्छन्नः सन्मात्रो वर्तते पुमान् ।**
**मूढो मत्तोज्ञ इत्येवं मायावेशात्प्रकाशते ॥ २६ ॥**

सुषुप्त्यवस्थामाह—मनस इति ॥ सवासनस्य मनसः कारणरूपेणावस्थानमुपसंहारः । स यदा भवेत्, तदास्यात्मनः सुषुप्तिरिति कथ्यत इत्यर्थः । तदुक्तं 'सर्वप्रकारज्ञानोपसंहारो बुद्धेः कारणात्मनावस्थानं सुषुप्तिः' इति । यस्मादेवमुपाधिगतविशेषावस्थोपाधिका एव चिदात्मनो जाग्रदाद्यवस्थाः, उपाधीनां च मायां विना चिदात्मसम्बन्धाभावश्च यस्मात् ॥२५॥, तस्मादयं पुमानात्मा मायासमाच्छन्नः समावृतब्रह्मभावः सन्मात्रोस्तीत्येव व्यवहारयोग्यमात्रो वर्तते । यद्वा—सन्मात्रो निर्विकल्पकसत्तामात्रोप्ययं पुमान् मायासमाच्छन्नो वर्तत इति योजना । तल्लिङ्गमाह—मूढ इति । स्वभावतश्चिदानन्दरूपे सन्देहविपर्यासाज्ञानाविषये कथमन्यथाभावरूपमूढत्वाद्यवतार इति भावः ॥ २६ ॥

**सुखमस्वाप्समित्येवं प्रबोधसमये पुमान् ।**
**सच्चिदानन्दरूपः सन्त्सम्यगेव प्रकाशते ॥ २७॥**

सर्वदा स्वप्रकाशचित्सदानन्द एवात्मेत्यत्रापि लिङ्गमाह—सुखमस्वाप्समिति॥ अयमर्थः—सुखमिति स्वरूपमनागन्तुकस्वप्रकाशसदानन्दरूपं परामृश्यते। अस्वाप्समित्युपाध्युपशमः ॥ न च सुषुप्तावागन्तुकं सुखमस्ति, तत्साधनाभावात् ॥ न च व्यापारोपशम एवोपाध्युपशमकृतः सुखसाधनम्, अन्यनिवृत्तिमात्रेणान्योत्पत्तेरदृष्टचरत्वात्, अभावाद्भावोत्पत्तेरनङ्गीकाराच्च ॥ न च दुःखाभाव एव सुखशब्देनोच्यत इति वाच्यं, तस्य सुषुप्तावनुभवसाधनाभावात्, अननुभूतस्य परामर्शायोगात् ॥ न चेदं सौषुप्तदुःखाभावानुमानं न स्मरणमिति वक्तुं युक्तम् अस्मर्यमाणत्वादेर्व्यभिचारात्, सामग्र्यभावादेश्चासिद्धेरिति विस्तृतमन्यत्रेत्यास्तां तावत् । तस्माद्यथावस्थितमेव स्वरूपं तदा सुखम् । यतः निष्क्रियस्य निरंशस्य चिदात्मनः शयनं गमनं वा स्वापः प्रबोधो वा स्वतो न सम्भवति, अत उपाधिकृतमेवैतत्सर्वमित्युपाध्युपशम एवास्य स्वापोस्वाप्समित्युल्लिख्यते इति । अतः सर्वास्वप्यवस्थासु सच्चिदानन्दरूप एवायमात्मेत्यर्थः॥ २७ ॥

**इत्थं जगत्समाविश्य भासमाने महेश्वरे ।**
**सूर्यादयोपि भासन्ते किमुतान्ये घटादयः॥ २८॥**

एवं वर्णितेर्थे मूलसङ्गतिं विशदयति—इत्थमिति ॥ जगत् कारणं कार्यं चाज्ञानतत्कार्यद्वयात्मकमवस्थात्रयं मायया समाविश्य विश्वतैजसप्राज्ञरूपेण वैश्वानरहिरण्यगर्भाव्याकृतरूपेण चाध्यात्मिकमाधिदैविकं च भासमाने

महेश्वरे सति सूर्यादयोपि सर्वार्थप्रकाशकतया प्रकाशस्वभावा अपि भासन्ते न स्वमहिम्ना । तत्राप्रकाशस्वभावतया प्रसिद्धानां घटादिविषयाणां कुतः स्वभावप्रकाशशङ्केत्यर्थः ॥ २८ ॥

**तस्मात्सत्ता च भावानामीश्वराश्रयणाश्रया ।**
**सत्यं ज्ञानमनन्तं च श्रुत्या ब्रह्मोपदिश्यते ॥ २९ ॥**

तस्मादीश्वर एव सत्तास्फुरत्ते इति निश्चीयेते तत्सम्पर्कादेवान्यत्र, इत्येतत्सिद्धमित्युपसंहरति—तस्मादिति ॥ चकारः स्फुरत्तां गमयति। ईश्वरमाश्रयन्त इतीश्वराश्रयणाः ईश्वरव्याप्ता आश्रया यस्याः सा ईश्वराश्रयणाश्रया, ईश्वराध्यस्तविषयाश्रया, न स्वरूपसद्विषयगतेत्यर्थः । ईश्वरस्य स्वत एव सत्ताज्ञानस्वरूपत्वे प्रमाणमाह—सत्यं ज्ञानमिति । श्रुत्या सत्यज्ञानानन्तशब्दैः ब्रह्मणो लक्षणमुक्तं–'सत्यं ज्ञानमनन्तं ब्रह्म'[1] इति । लक्षणं च सजातीयविजातीयव्यावर्तकं सत्स्वरूपमात्रपर्यवसितमुच्यते, यदाहुर्नैयायिकाः—'असाधारणो धर्मो लक्षणम्' इति । तत्र 'यतो वा इमानि भूतानि जायन्ते'[2] इत्यादिवाक्येन ब्रह्मोपलक्षणदशायां जगत्कारणत्वोपलक्षितस्य वादिपरिकल्पितप्रधानपरमाण्वादेः प्रसङ्गे जगत्कारणत्वेन ब्रह्मसजातीयाः प्रधानादयः प्रत्युपस्थिताः, विजातीयाश्च भूतभौतिकरूपाः कार्यवर्गाः, तेभ्य उभयविधरूपेभ्यः अनृतजडपरिच्छिन्नस्वभावेभ्यो व्यावृत्तब्रह्मस्वरूपबोधकं वाक्यमिति स्थिते, सत्यज्ञाने सत्तास्फुरणरूपे ब्रह्मण एवासाधारणौ धर्मौ; नान्यस्य कस्यचिदिति निश्चीयेत इत्यभिप्रायः ॥ २९ ॥

---

१. तै. उ. २-१ । २. तै. उ. ३-१ ।

**जाग्रत्स्वप्नोद्भवं सर्वमसत्यं जडमन्धवत् ।**
**ईश्वरश्चाहमित्येवं भासते सर्वजन्तुषु ॥ ३० ॥**

एतच्छ्रुतिबलादेतत्सिद्धमित्याह—जाग्रदिति ॥ अथ वा—श्रुत्या ब्रह्मणि सत्यताद्यवधारणादर्थसिद्धमर्थमाह—जाग्रदिति ॥ विमतम्, असत्यं, जडत्वात्, मृगतृष्णिकोदकवत् । विमतं जडं, पराधीनचेष्टत्वात्, अन्धवत्, अन्धपङ्गुवदित्यर्थः॥

एवं सर्वजगदधिष्ठानरूपतया सर्वानुस्यूतस्येश्वरस्य सर्वसत्तास्फुरत्तात्मत्वमुपपाद्य तस्यैव प्रत्यगात्मत्वं पूर्वश्लोकोक्तमुपपादयति—ईश्वरश्चाहमिति । योहमिति सर्वजन्तुषु भासते, स ईश्वर एवेतियोजना ॥ ३० ॥

**निर्विकल्पश्च शुद्धश्च मलिनश्चेत्यहं त्रिधा ।**

प्रतिज्ञातमर्थमुपपादयितुं अहङ्कारं भिनत्ति—निर्विकल्पश्चेति ॥

**निर्विकल्पं परं ब्रह्म निर्धूताखिलकल्पनम् ॥ ३१ ॥**
**धूल्यन्धकारधूमाभ्रनिर्मुक्तगगनोपमम् ।**

तत्र निर्विकल्पोहमवभासः ईश्वरविषय एवेत्याह—निर्विकल्पं परं ब्रह्मेति ब्रह्मणो मिर्विकल्पकत्वं विशदयति—निर्धूताखिलकल्पनमिति । निरस्तसमस्तविशेषतया अहमित्यवभासमान आत्मा ब्रह्मैवेत्यर्थः ॥३१॥ तदेवं दृष्टान्तेन स्पष्टयति—धूल्यन्धकारेति ॥

**विवेकसमये शुद्धं देहादीनां व्यपोहनात् ॥ ३२॥**
**यथान्तरिक्षं संक्षिप्तनक्षत्रैः किञ्चिदीक्ष्यते ।**

नैवात्मा कदापि भासत इत्याशङ्क्य स्वभावतः सर्वेषां भानाभावेपि विचारिततत्त्वम्पदार्थतत्त्वस्य कदाचिद्भानं भ-

वत्येवेत्यभिप्रेत्य तत्साधनं शुद्धमहङ्कारमुदाहरति—विवेकसमय इति। विवेकसमये देहादीनामनात्मत्वेनाहमवभास्यत्वस्य व्यपोहनात् परिच्छेदकाभावाच्छुद्धमेवात्मतत्त्वं ब्रह्म भासत इत्यर्थः। विवेकसमये भासमानमाकारं दृष्टान्तेन स्पष्टयन् अस्य साक्षाद्ब्रह्मभावाद्विशेषमाह—यथान्तरिक्षमिति। संक्षिप्तनक्षत्रैरुपशान्तं द्युप्रकाशैरुपलक्षितमन्तरिक्षमाकाशं यथा किञ्चिदीक्ष्यत इति, ईक्षणकालस्य किञ्चित्त्वाभिप्रायम्, एवमित्यर्थः ॥

**देहेन्द्रियादिसंसर्गान्मलिनं कलुषीकृतम् ॥ ३३ ॥**
**यथाकाशं तमोरूढं स्फुरत्यनवकाशवत् ।**

तृतीयमहङ्कारं सर्वप्राणिसाधारणमाह—देहेन्द्रियादीति॥ संसर्गोध्यासः॥ ३३ ॥ अनवकाशवत् परिच्छिन्नमिवेत्यर्थः॥

**अहमित्यैश्वरं भावं यदा जीवः प्रबुध्यते ॥३४॥**
**सर्वज्ञः सर्वकर्ता च तदा जीवो भविष्यति ।**

त्रिविधाहङ्कारनिर्देशस्य प्रयोजनमाह—अहमित्यैश्वरं भावमिति॥ यदेति प्रबोधोत्पत्तिदौर्लभ्यं सूचयति । अत्र जीवस्य सर्वज्ञत्वादिभवनं न विधीयते, किन्तु सर्वज्ञत्वाद्युपलक्षितेश्वरस्वरूपेणाभिव्यक्तो भविष्यतीत्यर्थः ॥

**माययाधिकसम्मूढो विद्ययेशः प्रकाशते ॥ ३५ ॥**
**निर्विकल्पानुसन्धाने सम्यगात्मा प्रकाशते ।**

कथमन्यस्यान्यात्मनाभिव्यक्तिस्तात्त्विकीत्याशङ्का न कार्या, अन्यत्वस्य जीवेश्वरयोर्मायानिबन्धनत्वादित्यभिप्रेत्याह—माययेति ॥३४॥३५॥ तस्मान्मायानिवृत्तये निर्विकल्पात्मावभासने यत्नः कार्य इत्याह—निर्विकल्पानुसन्धान इति ॥

अविद्याख्यतिरोधानव्यपाये परमेश्वरः ॥ ३६ ॥
दक्षिणामूर्तिरूपोसौ स्वयमेव प्रकाशते ।

प्रकरणार्थमुपसंहरति—अविद्याख्येति ॥

इति श्रीदक्षिणामूर्तिस्तोत्रार्थप्रतिपादके ॥ ३७ ॥
प्रबन्धे मानसोल्लासे चतुर्थोल्लाससङ्ग्रहः ॥

चतुर्थश्लोकव्याख्यामुपसंहरति—इतीति ॥ ३६ ॥ ३७ ॥

इति मानसोल्लासवृत्तान्ते चतुर्थोल्लासः समाप्तः ॥४ ॥



प्रमाणमेकं प्रत्यक्षं तत्त्वं भूतचतुष्टयम् ।
मोक्षश्च मरणान्नान्यः कामार्थौ पुरुषार्थकौ ॥ १ ॥

पूर्वश्लोकव्याख्यानेन प्रत्यक्षादिप्रमाणाभासनिबन्धना ब्रह्मात्मैकत्ववाक्यार्थे विरोधाशङ्का परिहृता ॥ इदानीं पञ्चमेन श्लोकेन वावदूकानां मतिविलसितकल्पनानिबन्धानां विरोधाशङ्कां परिहर्तुं तेषां मतान्युपन्यस्यति—प्रमाणमेकमित्यादिना ॥ परमनास्तिकश्चार्वाको मन्यते—एकं प्रत्यक्षमेव प्रमाणं नानुमानादीनीति ॥ अस्यायमभिप्रायः—प्रत्यक्षातिरिक्तेन प्रमाणेन यदस्तीति गृह्यते, तद्यावत्प्रत्यक्षेण न संवाद्यते, तावन्न विश्वासार्हं भवति, भूयस्सु स्थलेषु व्यभिचारोपलम्भात्, प्रत्यक्षदृष्टस्य चाव्यभिचारात् । अतः प्रत्यक्षमेवैकं प्रमाणमिति । भूतचतुष्टयं पृथिव्यप्तेजोवायवः तत्त्वं पदार्थतत्त्वं, न त्वाकाशादयः पदार्थाः सन्ति, तेषामप्रत्यक्षत्वात् । वायुस्त्वस्माकं प्रत्यक्ष एवेत्यभिप्रायः ॥ प्रमाणं प्रमेयं चोक्त्वा पुरुषार्थतत्त्वमाह—मोक्षश्चेति । मरणादन्यो नास्ति मोक्षो नाम पुरुषार्थ इत्यर्थः । चकाराद्धर्मोपि न

पुरुषार्थ इति समुच्चीयते । परिशेषात् कामार्थौ द्वौ प्रसिद्धौ पुरुषार्थौ पुरुषेणालषणीयौ सम्पाद्यौ च । तत्राप्यर्थः कामसाधनत्वेनैवाभिलाषगोचरः, कामस्तु साक्षादिति विवेकः ॥ १ ॥

**न कश्चिदीश्वरः कर्ता परलोककथा वृथा ।**

ननु भूतचतुष्टयमेव प्रमेयमिति कुतः? तस्य परिणमयितुरीश्वरस्य तद्विलक्षणस्याङ्गीकरणीयत्वात्, तथा जन्मत एव प्राणिनां सुखदुःखवैचित्र्यदर्शनात्तद्धेतुभूतौ पूर्वकृतधर्माधर्मौ स्त एवेत्यप्यङ्गीकार्यत्वात्, कारणवैचित्र्यमन्तरेण कार्यवैचित्र्यायोगादित्याशङ्क्याह—न कश्चिदिति ॥ भावानां स्वभावत एव परिणामोपपत्तेः, प्रतिव्यक्ति परिणमयितुरन्यस्य उपलम्भाभावाच्च । न हि धनुर्मुक्तेषोर्गमयिता कश्चिदुपलभ्यते, कृषीवलोप्तानां बीजानां वा परिणमयिता । यदि स्यात्तदा उपलभ्येत, तदभावाच्च तदभाव इति प्रत्यक्षः । कुत ईश्वरकल्पनावकाशः? । तथा सुखादिवैचित्र्यस्यापि तत्तत्सङ्घातस्वभावादेवोपपत्तौ नालौकिको हेतुः कल्प्य इति । उक्तं च—

‘स्वर्गः कर्तृक्रियाद्रव्यनाशेपि यदि यज्वनाम् ।
भवेद्दावाग्निदग्धानां फलं स्याद्भूरि भूरुहाम्’ इति ॥

**देहं विनास्ति चेदात्मा कुम्भवद्दृश्यतां पुरः ॥ २ ॥**
**ह्रस्वो दीर्घो युवा बाल इति देहोभिदृश्यते ।**

तथा देहातिरिक्तात्मकल्पनापि प्रत्यक्षविरुद्धेत्याह—देहं विनेति ॥ अमूर्तद्रव्यस्य सद्भावसाधकाभावादिति भावः ॥ २ ॥ देहस्यात्मत्वेऽपि प्रमाणं प्रत्यक्षानुभव इत्याह—ह्रस्वो दीर्घ इति ॥

**अस्ति जातः परिणतो वृद्धः क्षीणो जरन्मृतः॥३॥**
**इत्येवमुक्ताः षड्भावविकारा देहसंश्रयाः ।**

षड्भावविकाराः देहसंश्रया एवोक्ताः, न तदतिरिक्तात्मसंश्रयाः । तस्माद्विकार्यप्यात्मा न देहादन्योस्तीत्यर्थः ॥

**वर्णाश्रमविभागश्च देहेष्वेव प्रतिष्ठितः ॥ ४ ॥**
**जातकर्मादिसंस्कारो देहस्यैव विधीयते ।**
**शतं जीवेति देहस्य प्रयुञ्जन्त्याशिषं शुभाम् ॥५॥**

किञ्च—आस्तिकानां शास्त्रीयोपि व्यवहारो देहाश्रयो दृश्यते; तदतिरिक्तात्मकल्पनं तेषामप्रामाणिकमेवेत्याह—वर्णाश्रमविभागश्चेति ॥ ३ ॥ ४ ॥ ५ ॥

**इति प्रपञ्चं चार्वाको वाचयत्यल्पचेतनः ।**

चार्वाककल्पनोपन्यासमुपसंहरति—इति प्रपञ्चमिति । वाचयति शिष्यान् पाठयतीत्यर्थः । अल्पचेतनः अतिस्थूलमतिरित्यर्थः ॥

**केचिच्छ्वसिमि जीवामि क्षुधितोस्मि पिपासितः ६**
**इत्यादिप्रत्ययबलात् प्राण आत्मेति मन्वते ।**

अस्मादीषत्सूक्ष्ममतिकल्पनामाह—केचिदिति ॥ यदि भूतसङ्घातमात्रो देह एव श्वासादि कुर्वीत, तर्हि मृतदेहस्यापि तद्रूपत्वाविशेषाच्छ्वासादिव्यापारप्रसङ्गः । अतोपि देहातिरिक्तः प्राणः आत्मेति केचिन्मन्यन्त इत्यर्थः ॥

**केचिच्छृणोमि पश्यामि जिघ्रामि स्पन्दयाम्यहम्७**
**इतीन्द्रियाणामात्मत्वं प्रतियन्ति ततोधिकम् ।**

एतन्मतैकदेशिमतमाह—केचिच्छृणोमीति ॥ अहमनुभवस्येन्द्रियव्यापारायत्तत्वात्, तदतिरिक्तस्य देहचालकस्य प्राणस्य सद्भावे प्रमाणाभावात्, इन्द्रियोपरमे स्वापे देहचलनादर्शनात्, तत्र दृश्यमानस्य श्वासादेर्भ्रान्तिमात्रत्वात्, इन्द्रियाणां च युगपद्भोगादर्शनात्, नियतभोगविशेषवत्त्वाच्च, व्यस्तान्येवेन्द्रियाणि एकशरीरमारूढानि। अत एवानेके आत्मान इति इन्द्रियात्मवादिनो मतमित्यर्थः। अत्रेन्द्रियात्मवादोपन्यासानन्तरं प्राणात्मवादोपन्यासो द्रष्टव्यः। तत्र चेन्द्रियोपरमेपि प्राणव्यापारानुपरमादिति युक्तिरनुसन्धेया। पाठक्रमस्तु मूलश्लोकानुरोधादिति ॥

## जानामिप्रत्ययबलाद्बुद्धिरित्यपरे जगुः ॥ ८ ॥
## मायाव्यामूढचित्तानां तेषां दूषणमुच्यते ।

इदानीं बौद्धमतमाह—जानामीति ॥ बुद्धिः क्षणिकविज्ञानमात्मेति अपरे विज्ञानवादिप्रभृतयो बौद्धा जगुरित्यर्थः। इन्द्रियाभावेपि स्वप्ने बुद्धेरविकलायाः सत्त्वात्, व्यासङ्गदशायामिन्द्रियसम्बन्धेप्यर्थे व्यवहारानुदयात्तदतिरिक्ता बुद्धिरात्मेत्यर्थः। उपलक्षणमेतत्–शून्यवादिमतस्यापि। स हि सुषुप्तौ विज्ञानस्याप्यभावात्, अवस्थान्तरेहमित्यकस्मादहङ्कारोदयस्य संवृतिमात्रत्वात्, शून्यमात्मेति वदति। अन्यान्यास्तिकमतान्यप्यद्वैतमतविरोधीनीत्यत्रोपन्यस्तानि द्रष्टव्यानीति ॥ ६ ॥ ७ ॥ ८ ॥

उक्तमतकल्पनानां मायाभ्रान्तिमूलकत्वान्न तेषु विश्वासः कार्यः प्रामाणिकैरिति दूषणायोत्तरश्लोकमुत्थापयति—मायाव्यामूढचित्तानामिति ॥

देहं प्राणमपीन्द्रियाण्यपि चलां बुद्धिं च शून्यं विदुः
स्त्रीबालान्धजडोपमास्त्वहमिति भ्रान्ता भृशं वादिनः।
मायाशक्तिविलासकल्पितमहाव्यामोहसंहारिणे
तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये॥५॥

देहं प्राणमपीन्द्रियाण्यपीति॥ चलां बुद्धिं क्षणिकां बुद्धिं ये वादिनोहमात्मेति देहं प्राणमित्यादि विदुः जानन्ति, ते भृशम् अत्यन्तं भ्रान्ताः, यतो विवेकशून्या इत्याह—स्त्रीबालेति॥ जडाः ग्रहग्रस्ताः। कुत एतदिति चेत्, सर्वासां कल्पनानां मिथो विरुद्धत्वेन विप्रतिपत्त्यास्पदत्वात्, तस्याश्चैकस्मिन्धर्मिणि विरुद्धकोट्यालिङ्गनरूपत्वात् सर्वविकल्पास्पदतया विकल्पोत्पत्तेः प्राक्सिद्धं सर्वकल्पनानामागमापायसाक्षिभूतं सत्यज्ञानानन्दस्वभावमात्मेश्वरतत्त्वमवश्याश्रयणीयं, यत्स्वरूपानवगमात् विकल्पोदयः, यदवगमे सति तद्बाध इत्यभिप्रेत्याह—मायाशक्तीति। अक्षरार्थः सुगमः॥५॥

## इदमस्य तात्पर्यम्-

देहादीनां जडार्थानां पाषाणवदनात्मनाम्॥ ९॥
कथं भवेदहम्भावः समावेशं विनेशितुः।

पञ्चमश्लोकव्याख्यां प्रतिजानीते—इदमस्येति॥ अत्रेदं वादिनः प्रष्टव्याः-देहादयो बुद्ध्यन्ताः चेतनाः अचेतना वेति। तत्राद्यो न प्रामाणिक इत्याह—देहादीनामिति॥ जडाश्च ते अर्थाश्चेति जडार्थाः तेषामिति विग्रहः। अर्थाः विषयाः दृश्या इत्यर्थः। विमताः, अनात्मानः, जडत्वात्, पाषाणवत्; जडत्वं च, दृश्यत्वात्, तद्वदेवेत्यर्थः॥ ९॥

तस्मात् सालभञ्जिकातुल्यानामेषां कथं स्वतश्चिदात्मकेश्वर-समावेशं विनाहम्भावश्चेतनता भवेदिति योजना ॥

**देहस्तावदयं नात्मा दृश्यत्वाज्जाड्यवत्त्वतः ॥१०॥**
**रूपादिमत्त्वात्सांशत्वाद्भौतिकत्वाच्च कुम्भवत् ।**

एवं साधारणदूषणमुक्त्वा प्रत्येकं दूषणमाह—देहस्तावदयमिति ॥ दृश्यत्वं पराधीनप्रकाशत्वम् ॥ न चास्मदभिमतात्मनि व्यभिचारः, तस्य स्वप्रकाशत्वाङ्गीकारात् । जाड्यवत्त्वं स्फुरणभिन्नत्वम् । न हि देहःस्फुरणात्मा, स्वसत्तायां स्फुरणव्यभिचारात्, स्तम्भवत् ॥१०॥ रूपादिमत्त्वादयः प्रसिद्धा एव हेतवः ॥ न चात्र साध्याप्रसिद्धिः, देहातिरिक्तस्यात्मनोऽप्रसिद्धत्वात्, तत्प्रतियोगिकान्यत्वस्यानात्मत्वस्य चाप्रसिद्धेरिति वाच्यम्, अहमवभासगोचरमात्रे सर्वेषां वादिनामात्मत्वप्रसिद्धेः, तदन्यत्वस्य च घटादौ प्रसिद्धत्वादिति ॥

**मूर्छासुषुप्तिमरणेष्वपि देहः प्रदृश्यते ॥ ११ ॥**
**देहादिव्यतिरिक्तत्वात्तदात्मा न प्रतीयते ।**

उक्तानुमानेष्वप्रयोजकत्वशङ्कानिवृत्तये विपक्षबाधकं तर्कमाह—मूर्छेति ॥ यदि देह एवात्मा स्यात्, तदा तस्मिन्नवभासमाने आत्मानवभासो न स्यात् । भवति च मूर्छाद्यवस्थास्वात्मानवगमः सम्प्रतिपन्नः । अतस्तास्ववस्थासु अहमित्यनवभासमानः अवस्थान्तरे चावभासमान आत्मा देहान्य एवेति सिद्धमित्यर्थः ॥

**यथा जगत्प्रवृत्तीनामादिकारणमंशुमान् ॥ १२ ॥**
**पुमांस्तथैव देहादिप्रवृत्तौ कारणं परम् ॥**
**मम देहोयमित्येवं स्त्री बालोन्धश्च मन्यते ॥१३॥**

देहोहमिति नावैति कदाचिदपि कश्चन ।

देहातिरिक्तात्मसद्भावेनुमानान्तरमाह—यथेति ॥ गाढान्धकारव्याप्तगुहान्तस्स्थदेहव्यापारो, देहातिरिक्तप्रकाशसंसर्गनिमित्तः, देहव्यापारत्वात्, दिवा बहिर्दिवाकरप्रकाशसान्निध्यनिमित्तदेहव्यापारवदित्यर्थः । अपि च—देहो, नात्मा, ममप्रत्ययविषयत्वात्, वस्त्रादिवत् ॥ न चायमप्रसिद्धो हेतुः, अस्यानुभवस्य सार्वजनीनत्वादित्यर्थः ॥ यद्ययं देहः आत्मा भवेत्, तदाहं मनुष्य इतिवत् अहं देह इत्यपि स्फुरेत् । न चैवमस्ति ॥ अतो न देहः आत्मेत्यर्थः ॥ न च मनुष्योहमित्यनुभव एव देहात्मानुभवः, तस्याहमनुभवव्यभिचारात् । तथाहि—जाग्रदवस्थायां मनुष्योहमित्यभिमन्यमानः स्वप्ने कदाचित् व्याघ्रोहमित्यभिमन्यते, तत्राहमनुभवाव्यावृत्तावपि मनुष्यत्वाद्यनुभवस्य व्यावृत्तेर्मनुष्यत्वादिधर्मकदेहादन्य एवाहमवभासविषयः आत्मेति सिद्धं देहातिरिक्तात्मास्तित्वमिति ॥

ननु प्रत्यक्षैकप्रमाणवादिनं चार्वाकं प्रति अनुमानैर्देहातिरिक्तात्मास्तित्वसाधनमसङ्गतमिति चेत्, अत्र ब्रूमः—अनुमानाद्यनभ्युपगमे प्रतिवाद्यभिप्रायस्य प्रत्यक्षाविषयत्वात्तदुक्तिमार्गादिसमाश्रयणमन्तरेण तं प्रत्याक्षेपसमाधानादिप्रवृत्त्यनुपपत्तेः, यत्किञ्चित्कल्पयित्वा वदतोनवधेयवचनत्वात् वादित्वं प्रतिवादित्वं वा न भवेदिति विद्वद्भिरस्योपेक्षणीयतापत्तिः । पूर्वदृष्टसजातीयत्वादिना लिङ्गेन दृश्यमानेष्वर्थेष्विष्टानिष्टसाधनत्वानुमानाप्रवृत्तौ प्रवृत्तिनिवृत्तिव्यवहारानुदयात् जीवनमप्यस्य दुर्लभमित्यनुमानादेरनेनावश्याश्रयणीयत्वात् युक्तमेवानुमानाद्देहातिरिक्तात्मसाधनमिति

सर्वमवदातम् । तथा च परलोकादिनास्तिक्यवादोस्य प्रलापमात्रमित्युपेक्षणीयमेतदिति ॥

इन्द्रियाण्यपि नात्मानः करणत्वात्प्रदीपवत् ॥१४॥

इन्द्रियाण्यपि नात्मान इतीन्द्रियत्वादिमतनिराकरणग्रन्थः प्रायः स्पष्टार्थः ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥

वीणावादनवच्छ्रोत्रं शब्दग्रहणसाधनम् ।
चक्षुस्तेजस्त्रितयवद्रूपग्रहणसाधनम् ॥ १५ ॥

गन्धस्य ग्राहकं घ्राणं पुष्पसंपुटकादिवत् ।
रसस्य ग्राहिका जिह्वा दधिक्षौद्रघृतादिवत् ॥१६॥

करणत्वेन हेतुनेन्द्रियाणामनात्मत्वं साधितम्, तत्र हेत्वसिद्धिशङ्कां परिहरन् प्रत्येकमिन्द्रियाणां करणत्वं साधयति —वीणावादनवदित्यादिना ॥ यथा वीणादिवादनं शब्दं ग्राहयत् शब्दग्रहणसाधनं तथा श्रोत्रमपि तत्साधनं करणमित्यर्थः । एवमुत्तरत्रापि योजना । चक्षुः, तेजस्तया, रूपग्रहणसाधनम् । तेजस्त्रितयवदिति । सूर्यसोमाग्निवदित्यर्थः ॥१५॥ क्षौद्रं मधु ॥ १६ ॥

इन्द्रियाणि न मे सन्ति मूकोस्मि बधिरोस्म्यहम् ।
इत्याहुरिन्द्रियैर्हीना जनाः किं ते निरात्मकाः ॥१७॥

इन्द्रियाणां ममतास्पदत्वात् तत्सम्बन्ध्यहमास्पदोन्यस्तेभ्यः आत्मा स्यादिति युक्त्या साधयति—इन्द्रियाणि न मे सन्तीति ॥ उक्तानुमाने विपक्षे बाधकतर्कोयमुक्तो वेदितव्यः ॥ १७ ॥

---

१ क—दिवाद्येति पाठान्तरम् ।

प्राणोऽप्यात्मा न भवति ज्ञानाभावात्सुषुप्तिषु ।
जाग्रत्स्वप्नोपभोगोत्थश्रमविच्छित्तिहेतवे ॥ १८ ॥
सुषुप्तिं पुरुषे प्राप्ते शरीरमभिरक्षितुम् ।
शेषकर्मोपभोगार्थं प्राणश्चरति केवलम् ॥ १९ ॥

इदानीं मुख्यप्राणात्मवादे दोषमाह—प्राणोऽप्यात्मेति ॥ प्राणः, आत्मा न भवति, स्वसत्तायां चैतन्यव्यभिचारात्, देहवदित्यर्थः । सुषुप्तिष्विति । सुषुप्तिमूर्छामरणेष्वित्यर्थः । सुषुप्तौ चैतन्याभावं प्राणस्य साधयति—जाग्रदिति ॥ १८ ॥ शेषकर्मोपभोगार्थं शरीरमभिरक्षितुं प्राणश्चरति केवलमिति सम्बन्धः ॥ १९ ॥

प्राणस्य तत्र चैतन्यं करणोपरमे यदि ।
प्राणे व्याप्रियमाणे तु करणोपरमः कथम् ॥ २० ॥
सम्राजि हि रणोद्युक्ते विरमन्ति न सैनिकाः ।
तस्मान्न करणस्वामी प्राणो भवितुमर्हति ॥ २१ ॥

प्राण एव स्वश्रमापोहाय सुषुप्तः, नान्यः पुरुषः यस्य शेषकर्मभोगाय प्राणः शरीरेभिरक्षन् चरतीति कथ्यत इति चेत्, तत्राह—प्राणस्य तत्रेति ॥ तत्र सुषुप्तौ करणोपरमे यदि प्राणस्य चैतन्यम् आत्मत्वं स्यात्, तदा प्राणस्तस्यामवस्थायां निर्व्यापारः स्यादिति शेषः । व्यापारवत्त्वे सुषुप्तित्वव्याघातादित्यर्थः । किञ्च—प्राणश्चेदात्मा स्यात्, तदा तस्मिन् स्वव्यापारनिरते तदायत्तव्यापाराणां करणानामुपरमो न स्यात्, उपरमन्ते च सुषुप्तौ करणानि ॥ तस्मान्न करणाधिपतिः प्राणः, किन्त्वन्य एवेत्येतमर्थं सदृष्टान्तमाह—प्राणे व्याप्रियमाण इति ॥ २० ॥ २१ ॥

**मनसः प्रेरके पुंसि विरते विरमन्त्यतः ।**
**करणानि समस्तानि तेषां स्वामी ततः पुमान् ॥२२॥**

परिशेषात् प्राणान्यस्यात्मत्वं सेत्स्यतीत्याह—मनस इति॥ 'यो मनोन्तरो यमयति'[1] इति श्रुतेर्मनःप्रेरकोन्तर्यामी आत्मा पुरुषः। मनोद्वाराणि चेन्द्रियाणि। सर्वाध्यक्षे पुरुषे उपरते समनस्कानीन्द्रियाण्युपरमन्त इति च युज्यते। तस्मात्समनसां सर्वकरणानां स्वामी पुमान् प्राणादन्य एवेत्यर्थः ॥ २२ ॥

**बुद्धिस्तु क्षणिका वेद्या गमागमसमन्विता ।**
**आत्मनः प्रतिबिम्बेन भासिता भासयेज्जगत् ॥२३॥**

इदानीं क्षणिकविज्ञानात्ममतमपाकरोति—बुद्धिस्त्विति॥ गमागमावुत्पत्तिविनाशौ। एतावता तस्यानात्मत्वे किमायातमित्यत आह—आत्मन इति। साप्यन्याधीनप्रकाशत्वादेव नात्मेत्यर्थः ॥ २३ ॥

**आत्मन्युत्पद्यते बुद्धिरात्मन्येव प्रलीयते ।**
**प्रागूर्ध्वं चासती बुद्धिः स्वयमेव न सिद्ध्यति॥२४॥**

अन्याधीनप्रकाशत्वमस्याः साधयति—आत्मनीति ॥ स्वोत्पत्तिविनाशयोः स्वग्राह्यत्वाभावात्, अग्राह्यत्वे च तदसिद्धेः, उत्पत्तिविनाशवतश्चान्यग्राह्यत्वनियमात्, सिद्धं क्षणिकविज्ञानस्यान्यग्राह्यत्वेनानात्मत्वमित्यर्थः ॥ २४ ॥

**ज्ञानाच्चेत्पूर्वपूर्वस्मादुत्तरोत्तरसम्भवः ।**
**युगपद्बहुबुद्धित्वं प्रसज्येत क्षणेक्षणे ॥ २५ ॥**

---

[1] बृ. उ. ५-७-२०।

**बुद्ध्यन्तरं न जनयेन्नाशोत्तरमसत्त्वतः ।**

मास्तु विज्ञानस्वरूपः आत्मा, तत्सन्तान एवात्मा भविष्यतीत्याशङ्क्य स एव दुर्निरूप इत्याह—ज्ञानाच्चेदिति ॥ अयमर्थः—ज्ञानात् ज्ञानान्तरमुत्पद्यत इति वदन् वादी प्रष्टव्यः—पूर्वेणान्वितमुत्तरं जायते अनन्वितं वेति । तत्राद्ये दोषमाह—युगपदिति । पूर्वपूर्वबुद्ध्यन्वितानामुत्तरोत्तरबुद्धिजनकत्वे तत्तद्बुद्ध्युत्पत्तिक्षणेष्वनन्तबुद्ध्यनुवृत्तिप्रसङ्गात् विज्ञानक्षणिकत्ववादहानं प्रसज्येतेति ॥२५॥ द्वितीयं प्रत्याह—बुद्ध्यन्तरमिति । पूर्वबुद्धेर्निरन्वयविनाशे तस्यासतोन्यसाधकत्वानुपपत्तेस्ततो बुद्ध्यन्तरानुत्पाद इत्यर्थः । असतो जनकत्वे अतिप्रसङ्गादिति भावः ॥

**एषां सङ्घात आत्मा चेदेकदेशे पृथक्कृते ॥ २६ ॥**
**न चैतन्यं प्रसज्येत सङ्घाताभावतस्तदा ।**

एवं देहादिबुद्ध्यन्तानां प्रत्येकमात्मत्वे निराकृतेपि यदि कश्चित् ब्रूयात् एषां सङ्घात आत्माभ्युपगम्यते न प्रत्येकमिति, स प्रष्टव्यः—सङ्घात एव चेतयते? तदवयवा अपि प्रत्येकम्? इति । तत्राद्यमनूद्य दूषयति—एषामिति ॥ सङ्घातो नाम सम्पूर्णोवयवी, स चेदात्मा ॥२६॥ तदा तस्यैकदेशे नयने श्रोत्रे मनसि वाचि वा नष्टे सङ्घातस्य नष्टत्वाच्चैतन्यं न स्यात् ॥ न चायमिष्टप्रसङ्गः, अन्धबधिरमूकजडादेरपि जीवनदर्शनात् । अतो न समुदायचेतनत्वपक्षो युक्तिमानित्यर्थः ॥

**भिन्नदिग्गत्यभिप्रायो बहु चेत्तन्न पूजितम् ॥ २७॥**
**सद्यो भिन्नं भवेदेतन्निष्क्रियं वा भविष्यति ।**

अवयवचेतनपक्षं दूषयति—भिन्नेति ॥ बहु चेद्बहवश्चे-

देकस्मिन् सङ्घाते आत्मानः स्युः, तदा कदाचित् भिन्नदिग्गत्यभिप्रायो विरुद्धदिक्षु गमनेच्छा तेषां स्यादित्यर्थः । अस्त्विति चेत्, तत्राह-तन्न पूजितमिति ॥२७॥ कस्मान्न पूजितमिति चेत्, तत्राह—सद्यो भिन्नमिति। एकेनात्मना पूर्वस्यां दिशि आकृष्यमाणमेतत्सङ्घातरूपं तदेवान्येन प्रतीच्यां यथाकृष्यते, तथान्येनोदीच्यामन्येन दक्षिणस्यामिति, तदा सद्यः भिन्नं भवेत् विदीर्येतेत्यर्थः । यदि न विदीर्येत, तथापि निष्क्रियं कदाचित् भविष्यति,एकेनाकृष्यमाणस्यान्यैः स्थाप्यमानत्वादित्यर्थः । तस्माद्विचार्यमाणे सङ्घाततदवयवानामात्मत्वं न सङ्गच्छते इति तद्विलक्षण एवात्माभ्युपगन्तव्य इति सिद्धम्॥

**देहस्यान्तर्गतोप्यात्मा व्याप्त एवेति बुध्यते॥२८॥**
**अणुप्रमाणश्चेदेष व्याप्नुयान्नाखिलं वपुः ।**

एवमपि यावान् देहः तावानेव तदन्तर्गतः आत्मेति जैनमतानुसारिणः, अणुपरिमाण एवेति वेदान्त्येकदेशिनः, विभुरेवात्मेत्यन्ये साङ्ख्यादयो मन्यन्ते । अतो देहादिविलक्षणोप्यात्मा किम्परिमाण इति विचिकित्सायामाह—देहस्यान्तर्गतोपीति ॥ व्याप्त एवेति कर्तरि निष्ठा। व्यापक एवेत्यर्थः। इति बुध्यते ज्ञायते निश्चीयत इति यावत् ॥ २८॥ कथमिति चेत्, पक्षान्तरयोर्दुष्टत्वादित्यभिप्रेत्याणुपरिमाणात्मवादे दोषमाह—अणुप्रमाणश्चेदिति। अस्मिन्पक्षे सर्वाङ्गगतशीतोष्णादिनिबन्धनवेदनानुसन्धानयौगपद्याभावः प्रसज्येत। तथा चाणुमात्रचेतनाधिष्ठितस्य युगपदनेकाङ्गव्यूहनप्रत्यूहनादिव्यापाराभावप्रसङ्ग इत्यादिदोषो दुष्परिहर इत्यर्थः॥

**देहप्रमाणश्चेन्न स्याद्बालस्य स्थविरादिता ॥ २९॥**
**देहवत्परिणामी चेत्तद्वदेव विनङ्क्ष्यति ।**

देहपरिमाणात्मपक्षे दोषमाह—देहप्रमाणश्चेदिति ॥ अस्मिन्मते बालस्य स्थविरादिता युवस्थविरादिभावो न स्यात्, शरीरपरिमाणानां भिन्नत्वात् तद्गतात्मानोपि भिन्ना इति नैकस्य बाल्याद्यवस्था सिध्येत् । तस्यानङ्गीकारे प्रत्यभिज्ञाविरोधः प्रसज्येतेति भावः ॥

**कर्मणां परिणामेन क्रिमिहस्त्यादिमूर्तिषु ॥ ३० ॥**
**व्याप्तत्वात्प्रविशत्यात्मा घटादिष्वन्तरिक्षवत् ।**

अत्रैव दूषणान्तरमाह—कर्मणामिति ॥ अयमभिप्रायः—सन्त्येवैकस्यात्मनोनेकानि कर्माणि विरुद्धानेकदेहप्रवेशयोग्यानि ॥ तत्र मनुष्यशरीरपरिमाणस्यात्मनः कदाचित्केनचित्कर्मणा हस्तिजन्म प्राप्नुवतः तच्छरीरं न पूर्येत । कदाचित्क्रिमिशरीरं प्राप्नुवतो न तत्र जीवः स मीयेत । अतो नायमपि पक्षः साधुरिति ॥ २९॥ ३० ॥ व्यापकात्मपक्षे नायं दोष इत्याह—व्याप्तत्वादिति । अन्तरिक्षवत्—आकाशवदित्यर्थः ॥

**परमाणुप्रमाणेपि मनसि प्रतिभासते ॥ ३१ ॥**
**स्वप्ने चराचरं विश्वमात्मन्येव प्रतिष्ठितम् ।**

अल्पपरिमाणेपि प्रतीयमानः आत्मा व्यापक एवेत्यत्र लिङ्गमाह—परमाणुप्रमाणेपीति ॥ परमसूक्ष्मेपीत्यर्थः ॥३१॥ लिङ्गान्तरमाह—स्वप्न इति । एतल्लिङ्गद्वयमर्थापत्त्या आत्मनो व्यापकत्वगमकमिति द्रष्टव्यम् ॥

**देहादिष्वहमित्येवं भ्रमः संसारहेतुकः ॥ ३२ ॥**
**अन्तःप्रविष्टः शास्तीति मोक्षायोपादिशच्छ्रुतिः ।**

तस्माद्देहाद्यात्मवादानां युक्त्यसहत्वात्प्रमाणशून्यत्वा-

च देहादिष्वहमभिमानो भ्रम एवेति सिद्धमित्युपसंहरति—देहादिष्विति ॥ संसारहेतुकः संसारहेत्वविद्याहेतुक इत्यर्थः ॥ ३२ ॥ सृष्टेषु देहादिष्वात्मनोन्यस्य प्रवेशश्रुतेरपि सङ्घातादन्य आत्मैवैष्टव्य इत्यभिप्रेत्याह—अन्तःप्रविष्ट इति। तथा च श्रुतिः—'अन्तः प्रविष्टः शास्ता जनानाम्[1]। एकः सन् बहुधा विचारः' इति । मोक्षायेति । सङ्घातविवेकायेत्यर्थः ॥

**एवमेषा महामाया वादिनामपि मोहिनी ॥ ३३॥**
**यस्मात्साक्षात्कृते सद्यो लीयते च सदाशिवे ।**

प्रकारणार्थमुपसंहरति—एवमेषेति ॥ एषा महेश्वरशक्तिः । ॥३३॥ ईश्वरशक्तिकृतव्यामोहनिबन्धनैव वादिनां कल्पनेत्यत्र नियामकमाह—यस्मादिति । सदाशिवे साक्षात्कृते यस्मात् सद्यो लीयते, तस्मान्मायामयी सर्वकल्पनेत्यर्थः ॥

**देहेन्द्रियासुहीनाय मानदूरस्वरूपिणे ॥ ३४ ॥**
**ज्ञानानन्दस्वरूपाय दक्षिणामूर्तये नमः ।**

तस्मै श्रीगुरुमूर्तये नम इत्यस्य तच्छब्दार्थं प्रकटयन् अर्थमाह—देहेन्द्रियासुहीनायेति ॥

**इति श्रीदक्षिणामूर्तिस्तोत्रार्थप्रतिपादके ॥ ३५ ॥**
**प्रबन्धे मानसोल्लासे पञ्चमोल्लाससङ्ग्रहः ।**

पञ्चमश्लोकव्याख्यामुपसंहरति—इतीति ॥३४॥३५॥

इति श्रीमानसोल्लासवृत्तान्ते
पञ्चमोल्लासः समाप्तः ॥ ५ ॥

---

[1] तै. आ. ३—११।

**स्वप्ने विश्वं यथा तत्स्थं जाग्रत्यपि तथेति चेत् ।**
**सुषुप्तौ कस्य किं भाति कः स्थायी तत्र चेतनः ॥ १ ॥**

आत्मनि परमेश्वरे स्वप्न इव दृश्यजातं, मायाशक्तिविलासकल्पित एव जाग्रत्प्रपञ्चः; आत्मा चाधिष्ठानभूतो नित्य एको निर्विकार इति देहाद्यात्मवादनिराकरणेन प्रतिपादितम् ॥ तत्र बौद्धाः—स्थाय्यात्मा सद्रूपो न युक्तिपथमवतरति, अतः कथं विज्ञानशून्यपञ्चस्कन्धवादाः ईश्वरमायाशक्तिविलासकल्पितमहाव्यामोहरूपाः ? इति प्रत्यवतिष्ठन्ते—स्वप्ने विश्वमित्यादिना ॥ यथा विश्वं दृश्यं सर्वं स्वप्ने तत्स्थमीश्वराधिष्ठितं, तथा जाग्रत्यपि नित्यसिद्धेश्वराश्रयमिति यदभिमन्यते भवान् तदभिमन्यतां नाम; तथापीदं वक्तव्यम्—सुषुप्तौ कस्य द्रष्टुः किं तत्त्वं भाति ? तत्र सुषुप्तौ कः स्थायी चेतनः ? न कोपि तत्र चेतनो न कस्यापि किमपि भाति । अतो नास्ति त्वदभिमत आत्मेति शून्यवादी मन्यत इत्यर्थः ॥ १ ॥

**सर्वं च क्षणिकं शून्यं सर्वमेव स्वलक्षणम् ।**

विज्ञानवादिमतमाह—सर्वं चेति ॥ सर्वं च जगत् आत्मसहितं क्षणमात्रं सत्, तथा सर्वं शून्यं प्रागुत्तरक्षणयोरसत् । तथा सर्वं स्वलक्षणं स्वग्राह्यम्, न ग्राह्यग्राहकभेदवदित्यर्थः ॥

**सङ्घातः परमाणूनां मह्यम्ब्वग्निसमीरणाः ॥ २ ॥**

इदानीं पञ्चस्कन्धसमुदायमतमुपन्यस्यति—सङ्घात इति ॥ मह्यम्ब्वग्निसमीरणाश्चत्वारि भूतानि परमाणूनां चतुर्विधानां सङ्घातः, नारब्धावयवी, नापि परिणाम इत्यर्थः ॥ २ ॥

**मनुष्यादिशरीराणि स्कन्धपञ्चकसंहतिः ।**
**स्कन्धाश्च रूपविज्ञानसंज्ञासंस्कारवेदनाः ॥ ३ ॥**

अणुहेतुकं बाह्यसङ्घातमुक्त्वा स्कन्धहेतुकमध्यात्मसङ्घातमाह—मनुष्यादीति ॥ के ते स्कन्धा इत्यपेक्षायामाह—स्कन्धाश्च रूपेति ॥ ३ ॥

रूप्यन्त इति रूपाणि विषयाश्चेन्द्रियाण्यपि ।
विषयेन्द्रिययोर्ज्ञानं विज्ञानस्कन्ध उच्यते ॥ ४ ॥

उद्देशक्रमेण तेषां स्वरूपमुपदिशति—रूप्यन्त इतीति ॥ सविषयाणीन्द्रियाणि रूपस्कन्धः। विज्ञानस्कन्धस्वरूपमाह—विषयेन्द्रिययोरिति । ज्ञानमात्रं विज्ञानस्कन्ध इत्यर्थः ॥ ४ ॥

संज्ञागुणक्रियाजातिविशिष्टप्रत्ययात्मिका ।
पञ्चधा कल्पना प्रोक्ता संज्ञास्कन्धस्य सौगतैः ॥५॥

संज्ञास्कन्धस्वरूपमाह—संज्ञेति ॥ संज्ञा शब्दः, गुणो रूपादिः, क्रिया तत्तत्कार्यजननसामर्थ्यं, जातिरवच्छेदको धर्मविशेषः, विशिष्टप्रत्ययो नानावयवसंस्थाननिबन्धनप्रत्ययः । एवं पञ्चधा कल्पना संज्ञास्कन्धस्य सौगतैः सौत्रान्तिकादिभिः प्रोक्तेत्यर्थः ॥ ५ ॥

गवां गौरिति संज्ञोक्ता जातिर्गोत्वं तु गोगतम् ।
गुणाः शुक्लादयस्तस्य गच्छत्याद्यास्तथा क्रियाः ॥६॥
शृङ्गी चतुष्पाल्लाङ्गूली विशिष्टप्रत्ययो ह्यसौ ।
एवं पञ्चविधा क्लृप्तिः संज्ञास्कन्ध इतीर्यते ॥ ७ ॥

पञ्चधाकल्पनामुदाहरणेन व्युत्पादयति—गवामिति ॥६॥७॥

रागाद्याः पुण्यपापे च संस्कारस्कन्ध उच्यते ।
सुखं दुःखं च मोक्षश्च स्कन्धः स्याद्वेदनाह्वयः ॥८॥

संस्कारस्कन्धमाह—रागाद्या इति ॥ वेदनास्कन्धमाह

—सुखमिति । मोक्षो नाम निरुपप्लवविज्ञानसन्तानोदयः । मोहश्चेति पाठे विषयाद्याकारोपप्लुतविज्ञानसन्तान इत्यर्थः ॥ ८ ॥

**पञ्चभ्य एव स्कन्धेभ्यो नान्य आत्मास्ति कश्चन ।**
**न कश्चिदीश्वरः कर्ता स्वगतातिशयं जगत् ॥ ९ ॥**

आत्मा पञ्चस्कन्धातिरिक्तः कोपि स्थायी भविष्यतीत्याशङ्क्य तत्सत्त्वे प्रमाणाभावान्नैवमित्याह—पञ्चभ्य एवेति ॥ पञ्चभ्य एव स्कन्धेभ्यो नान्य आत्मास्ति कश्चन । तथापि संहन्तुरभावे सङ्घातासिद्धेः संहन्तेश्वरोन्योभ्युपेयः, स एवात्मा भविष्यतीत्याशङ्क्याह—न कश्चिदिति । स्वगत एवातिशयो यस्य तत्स्वगतातिशयं, नान्यकृतातिशययोगीत्यर्थः ॥ ९ ॥

**स्कन्धेभ्यः परमाणुभ्यः क्षणिकेभ्योभिजायते ।**
**पूर्वपूर्वक्षणादेव क्षणः स्यादुत्तरोत्तरः ॥ १० ॥**

स्वगतातिशयत्वमुभयविधेपि सङ्घाते साधयति—स्कन्धेभ्य इति ॥ स्कन्धेभ्यः आध्यात्मिकसङ्घातोभिजायते, परमाणुभ्यो बाह्य इत्यक्षरार्थः । ईश्वरः अन्यत्किमप्यनपेक्ष्य संहन्ता स्यात्? अपेक्ष्य वा? आद्ये दृष्टविरोधः। न हि तक्षा दार्वादिनिरपेक्ष एव गृहसङ्घातकर्ता दृष्टः । न युज्यते च; संहन्तृतायाः संहन्यमानसापेक्षत्वात् तदभावे अनुपपत्तेः । द्वितीये स्वयं संहननसमर्थान् पदार्थान् संहन्यादीश्वरः, असमर्थान्वा ? । नाद्यः, समर्थानामन्यानपेक्षत्वात्, अन्यथेश्वरस्यापि स्वप्रेरकान्तरापेक्षया प्रवृत्तिप्रसङ्गात् । एवं सत्यनवस्थाप्रसङ्गः । न द्वितीयः, जलेनापि दध्युत्पादनप्रसङ्गात् । अतो न संहन्ता चेतनादन्यः कल्पनां लभत इति भावः । किञ्चाणूनां स्कन्धा-

नां वा क्षणिकानां कुर्वद्रूपत्वेनाकुर्वत ईश्वरस्य सत्तानुपपत्तेः पूर्वपूर्वक्षणहेतुकः उत्तरोत्तरक्षणोभ्युपेय इत्याह—पूर्वपूर्वक्षणादेवेति ॥ १० ॥

पूर्वस्मादेव हि ज्ञानाज्जायते ज्ञानमुत्तरम् ।
स एवायमिति ज्ञानं सेयं ज्वालेतिवद्भ्रमः ॥ ११ ॥

विषयवद्विषयिणोपि ज्ञानस्य क्षणिकत्वात्तदपि न हेत्वन्तरसापेक्षमित्याह—पूर्वस्मादेवेति ॥ ननु स एवायं घटः सोहं पुमानस्मीत्येवं विषयविषयिणोः प्रत्यभिज्ञायाः स्थायित्वावगमात् कथं तद्विरुद्धं क्षणिकत्वमित्यत आह—स एवायमिति । ज्वालावन्निरन्तरोत्पत्तेः भेदाग्रहनिबन्धनो विभ्रमः प्रत्यभिज्ञेत्यर्थः ॥ ११ ॥

अस्ति भातीति धीर्भ्रान्तैरात्मानात्मसु कल्प्यते ।
हानोपादानराहित्यादाकाशः किं प्रकाशते ॥ १२ ॥

उपसंहरति—अस्तीति ॥ आत्मानात्मसु विषयविषयिष्वित्यर्थः । सविकल्पकज्ञानं भ्रम इत्यर्थः । कुत इत्यत आह—हानोपादानराहित्यादिति । तथाप्रतिपत्तिसंवादाभावादिति यावत् । तथा चाहेयानुपादेयस्याकाशवदवस्तुत्वात् न स्तोस्तित्वभाने इत्यर्थः ॥ १२ ॥

इत्येवं बौद्धसिद्धान्ती भाषमाणो निषिध्यते ।

उपन्यस्तपूर्वपक्षमनूद्य निराकरणायोत्तरं पद्यमवतारयति—इत्येवमिति ॥

“राहुग्रस्तदिवाकरेन्दुसदृशो मायासमाच्छादनात्
सन्मात्रः करणोपसंहरणतो योभूत्सुषुप्तः पुमान् ।

प्रागस्वाप्समिति प्रबोधसमये यः प्रत्यभिज्ञायते
तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये॥६॥"

राहुग्रस्तेति ॥ राहुग्रस्तदिवाकरेन्दुसदृशः यः पुमान् प्रागस्वाप्समिति तस्मै नमः यः पुमानात्मा करणोपसंहरणतः, इन्द्रियाणां विशेषविज्ञानाकारहेतूनामुपसंहारात् कारणात्मनि लयात्, सुषुप्तोभूत् विशेषविज्ञानरहितोभूत्। केनात्मना सुषुप्तो भवेदित्यपेक्षायामाह—सन्मात्र इति। स्वप्रकाशसत्तामात्र इत्यर्थः। यद्वा—करणोपसंहरणतः सुषुप्तः सन्मात्रो यः पुमानभूदिति सम्बन्धः। अर्थः पूर्ववत्। एवं सन्मात्रोपि स्वेन ज्योतिषा भासमानोपि तदानीं पूर्णप्रकाशात्मना न भासत इति तस्यानवभासमानतां दृष्टान्तेन स्पष्टयति—राहुग्रस्तदिवाकरेन्दुसदृश इति। तत्र हेतुः—मायासमाच्छादनादिति। मायया अनादितमोरूपया समाच्छादनात् आवृतब्रह्मात्मस्वरूपत्वादुपरक्तचन्द्रार्कवद्यथावदनवभासमानोपि सन्मात्रः, न शून्यः, क्षणिको वेत्यभिप्रायः। अथ कथमवगम्यते सुषुप्तौ सन्नेव पुमानिति? प्रत्यभिज्ञानप्रामाण्यादित्याह—प्रागस्वाप्समिति। प्रबोधसमये अस्मात्प्रागेतावन्तं कालं सुखमहमस्वाप्समिति प्रत्यभिज्ञायते। य एतावन्तं कालं सन्मात्रोभूवं न कमपि विशेषमज्ञासिषं, सोहमिदानीं प्रबुद्धो विप्रसृतकरणग्रामतया जागर्मीत्यात्मा प्रत्यभिज्ञायमानत्वात् न शून्यः क्षणिको वेत्यभिप्रायः। तस्मा इत्युक्तार्थम्॥ ६॥

अस्यायमाशयः—

शून्यं चेज्जगतो हेतुर्जगदेव न सिध्यति॥१३॥
घटः शून्यः पटः शून्य इति कैः प्रतिपाद्यते।

श्लोकतात्पर्यार्थमाह—अस्यायमिति ॥

यदुच्यते बौद्धैः, जगद्धेतुत्वेनोपलक्षित ईश्वरः आत्मा नास्ति, शून्यमेव जगतः प्रागवस्थेति, तदनूद्य दूषयति–शून्यं चेदिति ॥१३॥ कस्माज्जगतोसिद्धिः शून्यहेतुकत्वे इत्यत आह —घटः शून्य इति । यदुपादानकं हि यत्कार्यं तत्तदात्मना प्रतीयते; उपादीयते च, यथा सुवर्णोपादानकं कुण्डलादि सुवर्णात्मना; तथा शून्योपादानकत्वे जगतः शून्यात्मनैव व्यवहारः प्रसज्येत न सदात्मना; सदात्मनैव तु व्यवह्रियते सर्वैः, न शून्यात्मनेत्यर्थः । अकारणकार्योत्पत्त्यभ्युपगमे कार्यार्थिना उपादानप्रवृत्तिदर्शनविरोधात्, असत्पूर्वकत्वकल्पनायामसतः सदात्मतापत्तौ दृष्टान्ताभावात्, 'कथमसतः सज्जायेत' इति श्रुतिनिरस्तत्वाच्च, असत्कारणत्वपक्षो न प्रामाणिकैरादरणीय इति भावः ॥

**नैव भासेत शून्यं चेज्जगन्नरविषाणवत् ॥ १४ ॥**
**वस्त्वर्थी किमुपादद्याद्वारार्तः किं परित्यजेत् ।**

उक्तमेव सर्वव्यवहारविरोधं प्रपञ्चयति—नैव भासेतेति ॥ यद्वा—शून्यकारणकं जगदपि शून्यमेवास्तु, व्यवहारस्तु संवृतिमात्रेण भविष्यतीत्याशङ्क्य शून्यस्य निरुपाख्यत्वात् संवृत्यापि न व्यवहारसिद्धिरित्यभिप्रेत्याह—नैव भासेतेति । न हि नरविषाणं संवृत्यापि क्वचित्प्रतीयत इति भावः ॥१४॥ उपादानपरित्यागयोः सिद्धविषयत्वाच्छून्यपक्षे किमुपादद्यात् किं वा परित्यजेदित्यर्थः ॥

**को दिदृक्षान्निषिध्येद्वा शून्यत्वात्स्वस्य चात्मनः ॥**

---

१भा. उ. ६-२-२ ।

**अवसीदेन्निराकूतं तस्मात्सर्वमिदं जगत् ।**

व्यवहार्यवद्व्यवहर्तुरप्यभावात् शून्यवादे व्यवहारानुपपत्तिरित्याह—को विदध्यादिति ॥१५॥ शून्यवाददूषणमुपसंहरति—अवसीदेदिति । निराकूतं निर्हेतुकम् ॥

**स्कन्धानां परमाणूनां न सङ्घातयितास्ति चेत् ॥ १६**

**सङ्घातो न विना हेतुं जडा घटपटादयः ।**

इदानीं पञ्चस्कन्धसङ्घातात्मवादं निराकरोति—स्कन्धानामिति ॥ सोयं प्रष्टव्यः—स्कन्धानां परमाणूनां सङ्घातकर्ता कश्चिदस्ति न वा? अस्ति चेत्—स स्थिरः क्षणिको वा ?। आद्ये, तवापसिद्धान्तः । द्वितीये सङ्घातोत्पत्तिक्षणासम्बन्धिनः सङ्घातयितृत्वानुपपत्तिरित्यभिप्रेत्य द्वितीयमनूद्य दूषयति—न सङ्घातयितास्ति चेदिति ॥१६॥ अस्य दूषणम्—सङ्घातो न विना हेतुमिति । संहन्तारं हेतुं विना न सङ्घातः सिध्येत्, यतो घटपटादयः संहन्यमानाः पदार्थाः जडाः, स्वयमेव संहननासमर्था इत्यर्थः । न हि लोके जडानां तन्तुवीरणमृद्दार्वादीनां कुविन्दपु(बु)रुडकुलालतक्षाद्यनधिष्ठितानां स्वयमेव पटकटघटरथाद्यात्मना संहन्यमानतोपलभ्यते । अतो दृष्टान्ताभावात्, प्रत्युत दृष्टान्तविरोधाच्च, निरात्मकस्कन्धवादोऽप्रामाणिक इति भावः ॥

**महानुभावो भूयासमिति भ्रान्तश्च मन्यते ॥ १७॥**

**आत्मापलापको बौद्धः किमर्थं चरति व्रतम् ।**

क्षणिकात्मपक्षमङ्गीकुर्वतां बौद्धानामविवेकं प्रकटयन् असामञ्जस्यं तन्मतस्य सूचयति—महानुभाव इति ॥ भ्रान्तो दृष्टमात्रप्रत्ययः ॥१७॥ व्रतं पारलौकिकं चैत्यवन्दनादीत्यर्थः ।

क्षणिकात्ममते कर्तुर्भोक्तुश्चैकस्याभावात् व्रताचरणं व्यर्थमिति तद्विधानशास्त्रं तस्य न प्रामाणिकमिति भावः ॥

**प्रत्यभिज्ञा यदि भ्रान्तिर्भोजनादि कथं भवेत् ॥ १८ ॥**

यदुक्तं ज्वालाप्रत्यभिज्ञावत् सोहमिति प्रत्यभिज्ञा भ्रम इति तदनूद्य दूषयति—प्रत्यभिज्ञेति ॥ १८ ॥

**इष्टसाधनमेवैतदन्नं गतदिनान्नवत् ।**
**इति निश्चित्य बालोपि भोजनादौ प्रवर्तते ॥१९॥**

कथं न भोजनादि भवेदित्यत आह—इष्टसाधनमिति ॥ अयमर्थः—वस्तुनि दृष्टे पुरुषस्य तस्मिन् प्रवृत्तिर्वा ततो निवृत्तिर्वा जायते इत्येतदनुभवसिद्धम् । प्रवृत्तिनिवृत्ती च ममैतदनुकूलं प्रतिकूलमिति बुद्धिनिबन्धने । यदुपभुज्यमानं स्वात्मनि सुखं जनयति तदनुकूलतया प्रतीयते, दुःखजनकं तु प्रतिकूलतयेति प्रसिद्धम् । तथा चानुपभुक्तसजातीये अकस्मादुपनते वस्तुन्यनुकूलत्वादिबुद्ध्यनुदयात् सहसा तत्र प्रवृत्तेरसम्भवात्, यत्र सहसा वस्तुदर्शनमात्रात् प्रवृत्त्यादि दृश्यते तत्र पूर्वानुभूतसजातीयत्वेन लिङ्गेन तस्य स्वानुकूलत्वमननुकूलत्वं वानुमाय प्रवर्तते निवर्तते चेत्यङ्गीकार्यम् । एतच्च पूर्वोत्तरकालयोरतिविप्रकृष्टयोरनुगतस्यैकस्यानुसन्धातुरात्मनोऽभावे नोपपद्यत इति जीवनमपि दुर्लभं क्षणिकात्मवादिन इति । विमतोऽयमोदनो, मदिष्टसाधनम्, ओदनत्वात् तद्दिनभुक्तोदनवदिति निश्चित्य बालोपि अर्भकोपि भोजनादौ प्रवर्तते । अतः आबालवृद्धमागोपपण्डितमविप्रतिपन्नं व्यवहारमार्गमपलपन् बौद्धो दूरत एव परिहरणीयः श्रेय इच्छद्भिरिति भावः ॥ १९ ॥

अवकाशप्रदातृत्वमाकाशार्थक्रिया यथा ।
तथैवार्थक्रिया पुंसः कर्तृत्वज्ञातृतादिका ॥ २० ॥

यदप्युच्यते बौद्धैः स्थायिनोर्थक्रियानुपपत्तेः क्षणिक एवात्मैष्टव्य इति, तदप्यविचारिताभिधानमित्यभिप्रेत्यात्मन्यर्थक्रियां तावत्साधयति—अवकाशेति ॥ न चावरणाभावमात्रत्वादाकाशस्य नार्थक्रियाकारित्वमिति वाच्यम्, आवरणाभावमात्रस्यापि निरधिष्ठानस्यानुपलम्भात्, तदधिष्ठानतया कस्यचित्सत्ताङ्गीकारे तस्यैवाकाशत्वात् । तथा च पक्ष्यादेरुपगमे सति यदाव्रियते, तदपगमे च यद्विव्रियते तदस्त्वाकाशाख्यं भावरूपं वस्त्विति गमयितव्यम् । ज्ञातृत्वकर्तृत्वे त्वात्मनः प्रसिद्धे । अतोर्थक्रियाकारित्वात् सत्त्वसिद्धौ प्रागुक्तयुक्त्या सिद्धमस्य स्थायित्वमिति भावः ॥ २० ॥

सुषुप्तिसमयेप्यात्मा सत्यज्ञानसुखात्मकः ।
सुखमस्वाप्समित्येवं प्रत्यभिज्ञायते यतः ॥ २१ ॥

नन्वर्थक्रियासमय एव सत्त्वात्तामङ्गीकुर्वतो जाग्रत्स्वप्नयोः सत्त्वेपि सुषुप्तावर्थक्रियाभावात् असत्त्वमात्मनः प्राप्तमित्यत आह—सुषुप्तिसमयेपीति ॥ प्रत्यभिज्ञायाः प्रामाण्यं प्राक्साधितमेव । पूर्वोत्तरक्षणयोरेकस्य द्रष्टुः सद्भावानङ्गीकारात् सादृश्यग्राहकाभावात् बौद्धस्य प्रत्यभिज्ञाभ्रमोपि न सिद्ध्यतीति न तस्या भ्रमत्ववाचोयुक्तिर्युक्तेति भावः ॥२१॥

प्रत्यभिज्ञायत इति प्रयोगः कर्मकर्तरि ।
आत्मा स्वयम्प्रकाशत्वाज्जनात्यात्मानमात्मना २२

सुखमिति प्रत्यभिज्ञायत इति वदता आत्मनो विषयत्वमुक्तं, कर्मप्रत्ययनिर्देशात्; तथा च वेदान्तिनस्तव स्वय-

ज्ज्योतिरात्मेत्यभ्युपगमविरोध इति कस्यचिदाशङ्कां परिहरति—प्रत्यभिज्ञायत इति ॥ प्रयोग इति । मुच्यते वत्सः स्वयमेवेतिवत् कर्मकर्तरि प्रयोगात् न स्वप्रकाशत्वाभ्युपगमविरोध इत्येतत्स्पष्टयति—आत्मेति ॥ २२ ॥

**सुषुप्तौ मायया मूढो जडोन्ध इव लक्ष्यते ।**
**अप्रकाशतयाऽऽभाति स्वप्रकाशतयापि च ॥ २३॥**

एवं तात्पर्यवर्णनेनात्मनो नित्यशुद्धबुद्धमुक्तस्वभावतामुपपाद्येदानीं राहुग्रस्तेत्यक्षरार्थमर्थतो वर्णयति—सुषुप्तावित्यादिना ॥ जडत्वमचेतनत्वम्, अन्धत्वमज्ञातृत्वमिति भेदः अतो विशेषविज्ञानाभावादप्रकाशतया भाति, स्वरूपविज्ञानस्य विलोपाभावात् स्वप्रकाशतयापि चाऽऽभातीत्यर्थः॥२३॥

**जडात्मनि च देहादौ साक्षादीशो विविच्यते ।**

एतावता पूर्वार्धं व्याख्यातम् । उत्तरार्धाद्यपादार्थमाह—जडात्मनीत्यादिना ॥ देहेन्द्रियमनोबुद्धिषु जडेषु स्वपरव्यापारानभिज्ञेषु योहमद्राक्षं–सोहं जिघ्रामि, शृणोमि, वच्मि, मन्ये, जानामि, गच्छामि, तिष्ठामि, लङ्घयामीति सर्वावभासकतया प्रत्यभिज्ञाता आत्मा साक्षादीश्वर इति विविच्यत इत्यर्थः ॥

**एषैव मोहिनी नाम मायाशक्तिर्महेशितुः ॥ २४ ॥**
**मोहापोहः प्रमातॄणां मोक्ष इत्यभिधीयते ।**

एवं नित्यशुद्धत्वादिलक्षणेश्वरस्वभावत्वमात्मनो यया आव्रियते, यस्याश्चास्तमये भेदकाभावात् विद्यावतां संसारबन्धनिवृत्तिः, एषैव मोहिनी मायाशक्तिः, यया मोहिताः बौद्धाः नैरात्म्यवादमुपगता इत्युपसंहरति—एषैवेति ॥

**अवस्थात्रयनिर्मुक्तो दोषादिभिरनाविलः ॥ २५ ॥**

प्रबोधसमये प्रत्यभिज्ञायमानस्यात्मनः स्वरूपमाह—अवस्थात्रयेति ॥ अवस्थात्रयसाक्षित्वादेव अवस्थात्रयवर्जितः । एवमपि देहादिभिरनाविलः अकलुषितः साक्ष्यसम्बन्धकृतदोषरहितः, असङ्गत्वादित्यर्थः ॥ २४ ॥ ॥ २५ ॥

**इषीक इव सन्मात्रो न्यग्रोधकणिकोपमः ।**
**बाह्याद्बाह्यदलोन्मुक्तकदलीकन्दसन्निभः ॥ २६ ॥**

अस्यात्मनः सदैकरूपत्वमिन्द्रियागोचरत्वं च दृष्टान्ताभ्यामाह—इषीक इवेति ॥ मुञ्जतृणपुञ्जान्तरशलाका इषीकेत्युच्यन्ते । अस्य शब्दस्योभयलिङ्गत्वेन पुंस्त्वेन निर्देशः । तस्यान्तरेवोपलभ्यत्वं दृष्टान्तेनाह—बाह्यादिति ॥ २६ ॥

**निरंशो निर्विकारश्च निराभासो निरञ्जनः ।**
**पुरुषः केवलः पूर्णः प्रोच्यते परमेश्वरः ॥ २७ ॥**

उक्तदृष्टान्तवशादेव सावयवत्वपरिच्छेदविकारित्वादि स्यादिति शङ्कां वारयति—निरंश इत्यादिना ॥ निराभासः जन्यज्ञानाविषयः । निरञ्जनः निर्लेपः । केवलः उपाधिसंसर्गरहितः । पूर्णः अपरिच्छिन्नः । एवंविधः परमेश्वर एव पुरुषः आत्मा, आत्मा पुरुष एव परमेश्वरः प्रोच्यते सर्ववेदान्तेष्वित्यर्थः ॥ २७ ॥

**वाचो यत्र निवर्तन्ते मनो यत्र विलीयते ।**
**एकी भवन्ति यत्रैव भूतानि भुवनानि च ॥ २८ ॥**
**समस्तानि च तत्त्वानि समुद्रे सिन्धवो यथा ।**
**कः शोकस्तत्र को मोह एकत्वमनुपश्यतः ॥ २९ ॥**

उक्तलक्षणेश्वरात्मनः सर्वप्रपञ्चधर्मविलक्षणस्वभावत्वं श्रुत्युक्तं विशदयति—वाच इति॥ तथा च श्रुतयः 'यतो वाचो निवर्तन्ते। अप्राप्य मनसा सह[1]' 'आत्मेत्येवोपासीतात्र ह्येते सर्व एकं भवन्ति[2]' 'परेऽव्यये सर्व एकी भवन्ति[3]' 'यथास्यैव प्रज्ञायै सर्वाणि भूतानि एकं भवन्ति तद्व्याख्यास्यामः[4]' 'अथास्मिन् प्राण एवैकधा भवति[5]' इत्याद्याः ॥ २८ ॥

जीवानामुपाधिपरित्यागेन ब्रह्मात्मैकतापत्तिप्रतिपादकश्रुत्यर्थमाह—समस्तानि चेति ॥ तत्त्वानि जीवाः। तथा च श्रुतिः—

'यथा नद्यस्स्यन्दमानास्समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय। तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्[6]' इति। एवमेकात्मत्वं पश्यतो निखिलबन्धनिवृत्तिरित्यत्रापि श्रुतिमुदाहरति—कः शोकस्तत्रेति ॥ 'यस्मिन् सर्वाणि भूतान्यात्मैवाभूद्विजानतः। तत्र को मोहः कः शोक एकत्वमनुपश्यतः' इति ईशावास्योपनिषन्मन्त्रोऽनेनोक्तः ॥ २९ ॥

**वाच्यवाचकरूपत्वात् सविकल्पोऽपि सन्नहम्।**
**देहादीनां व्यपोहेन लक्ष्ये[7]न्निर्विकल्पकम् ॥ ३० ॥**

कथमेवंलक्षणः आत्मा स्यात्' तस्य नामरूपप्रपञ्चाधिष्ठानत्वेन वा तदुपादानत्वेन वा तदन्तःपातित्वादित्यत आह—वाच्यवाचकरूपत्वादिति ॥ ३० ॥

**असन्नेव भवेद्विद्वानसद्ब्रह्मेति वेद चेत्।**
**अस्ति ब्रह्मेति चेद्वेद सन्तमेनं ततो विदुः ॥३१॥**

१ तै. उ. २-४। २ बृ. उ. ३-४-२। ३ मु. उ. ३-२-७।
४ कौ. उ. २-४। ५ कौ. उ. ३-३। ६ मु. उ. ३-२-८।
७ सम्भवेन्निर्वीति पाठान्तरम्।

देहादिव्यपोहस्य शून्यावसानत्वात् कथं निर्विकल्पकात्मसिद्धिरित्याशङ्क्य विचारपूर्वकं श्रुत्या निर्विकल्पकात्मसत्तानिर्धारणान्मैवमित्याह—असन्नेवेति॥ यः कोपि असत् नास्ति ब्रह्मेति वेद चेत्—सोप्यसन्नेव अविद्यमान एव भवति, ब्रह्मण एवात्मत्वात्। तस्य नास्तित्वे स्वस्यैव नास्तित्वापातादित्यर्थः। स्पष्टमन्यत्॥ ३१॥

इति श्रीदक्षिणामूर्तिस्तोत्रार्थप्रतिपादके।
प्रबन्धे मानसोल्लासे षष्ठोल्लासस्य सङ्ग्रहः॥ ३२॥

षष्ठश्लोकव्याख्यामुपसंहरति—इतीति॥ ३२॥
इति मानसोल्लासवृत्तान्ते षष्ठोल्लासः॥ ६॥

---

प्रत्यभिज्ञाबलादात्मा स्थायी निर्धार्यते यदि।
का नाम प्रत्यभिज्ञैषा किं वा तस्याश्च कारणम्[1]॥१॥

प्रत्यभिज्ञाबलादात्मनः स्थायित्वमुक्तम्, तत्र प्रत्यभिज्ञायाः प्रमाणत्वमाक्षिपति—प्रत्यभिज्ञाबलादिति॥ १॥

प्रत्यक्षादिप्रमाणेषु प्रत्यभिज्ञा न पठ्यते।
कथं तस्याः प्रमाणत्वमिति पृच्छन् प्रबोध्यते॥२॥

का नाम प्रत्यभिज्ञेत्याक्षेपार्थं प्रकटयति—प्रत्यक्षादीति॥ इन्द्रियार्थसन्निकर्षमात्रजन्यज्ञानविशेषः प्रत्यक्षम्, न प्रत्यभिज्ञा तथा विधा, तस्यां संस्कारस्यापि कारणत्वात्। अतः प्रत्यक्षं तावन्न भवति प्रत्यभिज्ञा। अनुमानादिष्वस्याः प्रसङ्ग एव नास्ति, अर्थसम्प्रयोगस्यापि कारणत्वात्। नापि स्वतन्त्र-

१ तस्याः प्रयोजनमितिपाठः।

मिदं प्रमाणान्तरम् । तस्मान्न प्रत्यभिज्ञा आत्मनः स्थायित्वे प्रमाणमित्यर्थः । एतत्परिहारायोत्तरश्लोकमवतारयति—इति पृच्छन् प्रबोध्यत इति ॥ २ ॥

"बाल्यादिष्वपिजाग्रदादिषु तथा सर्वास्ववस्थास्वपि
व्यावृत्तास्वनुवर्तमानमहमित्यन्तः स्फुरन्तं सदा॥
स्वात्मानं प्रकटी करोति भजतां यो मुद्रया भद्रया
तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये॥७॥"

यः भजतां शिष्याणां स्वात्मानं प्रकटी करोति। कया? भद्रया कल्याणकारिण्या मुद्रया तर्कमुद्रया प्रकटी करोति, व्याख्यानमुद्राप्रदर्शनेन शिष्याणां स्वात्मतत्त्वं साक्षात्कारयति, तस्मै श्रीगुरुमूर्तये इत्यन्वयः । किंलक्षणं स्वात्मानं ? सदा सर्वदा अहमित्यन्तः स्फुरन्तम् अहमिति प्रत्ययरूपेण शरीरान्तः स्फुरन्तं प्रकाशमानमित्यर्थः । एतदुक्तं भवति—अहमित्यनिदं चिदात्मनि तादात्म्येनाध्यस्तमविद्याकार्यमन्तःकरणमुच्यते । तच्चाहमित्येवमाकारया स्ववृत्त्या स्थूलदेहपर्यन्तं प्रसर्पति । तथा च स्वाध्यस्ताहङ्कारात्मनावभासमानमेवात्मानमहङ्कारगतेदमंशापोहेन विविच्य स्वं स्वाभाविकं ब्रह्मरूपं पूर्णमात्मानं प्रकटी करोति। तत्र विवेकप्रकारं दर्शयन्नात्मानं विशिनष्टि—बाल्यादिष्विति । बाल्यकौमारयौवनवार्धकेषु तथा जाग्रत्स्वप्नसुषुप्तिषु तथान्यास्वपि सर्वासु मूर्छातुरास्वास्थ्यसस्वनिस्स्वाद्यनेकावस्थासु। किंलक्षणासु? व्यावृत्तासु प्रतिप्रत्ययकालं भिन्नासु अनुवर्तमानमभिन्नमहमाकारानुरक्तदेहेन्द्रियादेरनेकविधपरि-

---

१ तुरावस्थ । ऽश्वासनिः श्वासवे । निपाण नारम् ।

णामवतः सर्वावस्थस्य सदैकरूपोऽपरिणममाणः सन् अवभासकश्चित्सदानन्दाद्वयब्रह्मरूपः आत्माहमस्मीति जानतेति शिष्यान् बोधयन्तमित्यर्थः ॥ ७ ॥

एतदुक्तं भवति—

भातस्य कस्यचित्पूर्वं भासमानस्य साम्प्रतम् ।
सोयमित्यनुसन्धानं प्रत्यभिज्ञानमुच्यते ॥ ३ ॥

श्लोकतात्पर्यं वक्तुमारभते—एतदुक्तं भवतीति ॥

तत्र 'का नाम प्रत्यभिज्ञा' इति किं प्रश्नः कृतः ? उत आक्षेपः? इति पूर्ववादी प्रष्टव्यः । तत्राद्यस्योत्तरमाह—भातस्येति ॥ कस्यचित्पदार्थस्य पूर्वं क्वचिद्भातस्य अवगतस्य साम्प्रतमिदानीं भासमानस्य अवगम्यमानस्य सोयमिति सामानाधिकरण्येन यदनुसन्धानं तत्प्रत्यभिज्ञानमुच्यते। पूर्वोत्तरदेशकालवैशिष्ट्यांशपरित्यागेन अनुगताविशिष्टवस्तुमात्रानुसन्धानं प्रत्यभिज्ञानमित्यर्थः ॥ ३ ॥

तद्देशकालाकारादीनवधूयाऽऽनुषङ्गिकान् ।
यथैकं वस्त्वनुस्यूतं प्रत्यभिज्ञानमात्मनः ॥ ४ ॥

उक्तं च बाह्यार्थगोचरं प्रत्यभिज्ञानं सप्रकारमनूद्यात्मनि तद्दर्शयति—तद्देशेति ॥ आकारः अवयवसंस्थानविशेषः । आनुषङ्गिकान् अन्यतः प्राप्तान्, अस्वाभाविकानिति यावत् । यथैकं वस्त्वनुस्यूतमवगम्यते तथात्मनः प्रत्यभिज्ञानं भवतीत्यर्थः ॥ ४ ॥

मायानुषङ्गसञ्जातकिञ्चिज्ज्ञत्वाद्यपोहनात् ।
सर्वज्ञत्वादिविज्ञानं प्रत्यभिज्ञानमात्मनः ॥ ५ ॥

दार्ष्टान्तिकमात्मप्रत्यभिज्ञानमुपपादयति—मायेति ॥ पदार्थपरिशोधनदशायामनृतजडपरिच्छिन्नानात्मतद्धर्मविलक्षणतया अपरिच्छिन्नज्ञानरूपेण सम्भावितस्य वाक्यार्थावगमसमये मायातत्कार्याध्यासनिबन्धनकिञ्चिज्ज्ञत्वादेरध्यस्तांशापोहेनापोहनात् सर्वज्ञत्वादिविज्ञानम् । आदिशब्दादनन्तानन्दरूपता गृह्यते। अपरिच्छिन्नज्ञानानन्तानन्दरूपसाक्षात्कारः आत्मनः प्रत्यभिज्ञानमित्यर्थः ॥ ५ ॥

**पूर्वजन्मानुभूतार्थस्मरणान्मृगशावकः ।**
**जननीस्तन्यपानाय स्वयमेव प्रवर्तते ॥ ६ ॥**

प्रश्नोत्तरमुक्त्वा आक्षेपः पूर्वमेव 'प्रत्यभिज्ञा यदि भ्रान्तिर्भोजनादि कथं भवेत्' इत्यनेन परिहृत इति मत्वा आत्मनः स्थायित्वं साधयति—पूर्वजन्मेति ॥ मृगशावको मृगबालकः सद्योजातः तत्कालमेव जननीस्तन्यपानाय स्वयमेव यत्प्रवर्तते, तत्पूर्वजन्मानुभूतार्थस्मरणादेव । अन्यथा खुरधावनायामपि प्रवर्तेतेत्यर्थः । तथा च बाल्यादिस्थाविरान्तं विपरिणममाणेपि देहे यथात्मा न विपरिणममाणो भिन्नासु अवस्थासु अभिन्नः तथा देवतिर्यङ्मनुष्यादिक्रमभाव्यनेकशरीरेषु जायमानेषु अजायमानो म्रियमाणेषु अम्रियमाण एवात्मेति तस्य सिद्धानित्यतेत्यभिप्रायः ॥ ६ ॥

**तस्मान्निश्चीयते स्थायीत्यात्मा देहान्तरेष्वपि ।**
**स्मृतिं विना न घटते स्तन्यपानं शिशोर्यतः ॥७॥**

आत्मनः स्थायित्वोपपादनमुपसंहरति—तस्मादिति ॥ एतदुक्तं भवति—पूर्वानुभूतविषयसंस्कारवशादनुभूतसजातीयदर्शने पूर्वानुभूतविषयस्वभावं स्मरन् परिदृश्यमानविष-

येपि तज्जातीयत्वेन लिङ्गेन अस्यापि तादृक्स्वभावतां कल्पयन् उभयवस्त्वनुभवकालानपायिनमेकमात्मानं प्रत्यभिजानाति पुमानिति । एवं च सति प्रत्यभिज्ञा प्रमाणमेव। सा च प्रत्यक्षेन्तर्भवति, सामग्रीभेदस्य प्रत्यक्षव्यक्तिभेदनियामकत्वेन जात्यन्तरगमकत्वाभावात् । न हि दोषसंस्कारसहितसम्प्रयोगजन्यं भ्रान्तिज्ञानमप्रत्यक्षं भवति । तस्मात् प्रत्यभिज्ञानं प्रत्यक्षं प्रमाणमिति स्थितम् ॥ ७ ॥

**पूर्वत्रानुभवे काले स्मृतिकाले परत्र सन् ।**
**आत्मा संस्काररूपेण स्मरत्यर्थं स्वनिष्ठितम् ॥८॥**

उक्तमेवार्थं विशदयति—पूर्वत्रेति ॥ स्मृतिकालः प्रागनुभूतस्यानुभूतत्वेनानुभवकालः । उभयकालेपि सन्नात्मा संस्काररूपेणाव्यक्तरूपेण स्वनिष्ठितं स्वगतमर्थं स्मरति प्रत्यभिजानातीत्यर्थः ॥ ८ ॥

**प्रत्यभिज्ञेति भावानां स्मृतिश्चेदभिधीयते ।**
**आत्मस्थैर्ये प्रमाणत्वं स्मृतिश्च प्राप्नुयात्कथम् ॥९॥**

स्मरतीत्यत्र यथाश्रुतमादाय पूर्वपक्षी प्रत्यवतिष्ठते—प्रत्यभिज्ञेति ॥ स्मृतेरप्रमाणत्वस्य सर्ववादिसम्मतत्वादित्यर्थः ॥ ९ ॥

**स्मृतौ प्रकाशो नार्थस्य न चाप्यर्थस्य निश्चयः ।**
**न चाप्यर्थानुभवयोरङ्गुल्योरिव सम्भवेत् ॥ १० ॥**

स्मृत्यप्रामाण्यं स एव साधयति—स्मृताविति ॥ स्मृतिर्न प्रत्यक्षं प्रमाणं, यतोर्थस्य स्मृतौ प्रकाशो यथावस्थितस्वरूपावभासो नास्ति । नाप्यनुमानादिरूपमित्याह—न चापीति । निश्चयः सद्भावनिश्चयः । न हि स्मरणदशायामर्थस-

त्तानिश्चयोस्तीत्यर्थः। 'न चार्थानुभवस्य वा' इति यदि द्वितीयपादपाठो लभ्यते, तदा उत्तरार्धं सुसङ्गतं भवति। पूर्वानुभूतार्थानुभवस्य वा न च स्मृतौ प्रकाशः, तस्य नष्टत्वादिति तस्यार्थः। अत एव नोभयोरपि प्रकाशः सम्भवेदित्याह—न चाप्यर्थान्विति। अङ्गुल्योरिवेति। व्यतिरेकदृष्टान्तः॥ १०॥

**नानुभूतिविशिष्टस्य पदार्थस्य च दण्डवत्।**
**सर्वत्राप्येवमित्येवं प्रसङ्गादिति तच्छृणु॥ ११॥**

तथाप्यन्यतरविशिष्टस्यान्यतरस्मृतौ प्रकाशो भविष्यतीत्याशङ्क्य तदपि दुर्घटम्, अतिप्रसङ्गादित्याह—नानुभूतीति॥ चकारात् पदार्थविशिष्टानुभूतिर्गृह्यते। पदात्पदार्थस्मृतावपि अनुभवविशिष्टार्थप्रकाशप्रसङ्ग इत्यर्थः। निराकरोति—तच्छृण्विति॥ ११॥

**प्राक्तनानुभवे नष्टे तदवष्टम्भसम्भवात्।**
**संस्कारसंज्ञात्सामग्र्यात् पौरुषाज्जायते स्मृतिः॥१२॥**

न वयं स्मृतिं प्रमाणं ब्रूमः, किन्तु स्मृत्यन्यथानुपपत्तिमात्मस्थैर्ये प्रमाणमभ्युपगच्छामः, अतो न कोपि भवदुक्तदोषोस्मन्मते इत्यभिप्रेत्य स्मृत्युत्पत्तौ तावत्सामग्रीं दर्शयति—प्राक्तनानुभव इति॥ पूर्वं यदा कदाचिज्जातोनुभवः प्राक्तनानुभवः, तस्मिन्नष्टे सति तदवष्टम्भः प्राक्तनानुभवाश्रयः तस्मिन् सम्भवो यस्य तत्तथा। संस्कार इति संज्ञा यस्य, तस्मात् सामग्र्यात् समग्रभावात्। असाधारणकारणादिति यावत्। पौरुषात् पुरुषेण चैतन्यप्रधानेन प्रमात्रेश्वरेण चा-

धिष्ठितादित्येतत्, एवंलक्षणात् सामग्र्यात् स्मृतिर्जायते ॥ १२ ॥

**आवेद्यानुभवे नष्टे तदीयं विषयं प्रति ।**
**अनुभावकमात्मानं बोधयत्यनपायिनम् ॥ १३ ॥**

एवं जायमाना स्मृतिः किं करोतीत्येतदाह—आवेद्येति॥ आवेद्यस्य सम्यग्वेदनीयस्यानुभवे नष्टे तदीयं विषयमावेद्यं प्रति यः पूर्वमनुभावकः अनुभविता आत्मा तमात्मानमनपायिनं नित्यमेकं बोधयति ज्ञापयति। स्मृतिरिति शेषः। तथा च पूर्वानुभवजनितसंस्कारात् पूर्वानुभूतं विषयं स्मरन्निदानीन्तनविषयानुभवसमनन्तरमेवं मन्यते पुरुषः—योऽहं पूर्वं हस्तिनरतुरगादिसङ्कुलं राज्यमन्वभूवं सोहमद्य हिमगिरिकुहरगुहापरिसरप्रपतन्मन्दाकिनीघोषमनुभवामीत्यात्मानं प्रत्यभिजानाति । एवमेव जन्मान्तरीयमपि विषयं स्मरञ्जन्मान्तरीयमप्यात्मानं प्रत्यभिजानाति पुमानिति स्मृतिद्वारत्वात् प्रत्यभिज्ञानस्य स्मृतिरेव प्रत्यभिज्ञेत्यभिहितमिति भावः ॥ १३ ॥

**विषये च प्रमुषिते नष्टे चानुभवे सति ।**
**स्वविश्रान्तं स्मरत्यर्थं देवोऽप्रमुषितस्सदा ॥ १४ ॥**

वेद्यवेदनयोर्व्यावृत्तावपि वेदिता न व्यावर्तते, अतोपि वेदितात्मा नित्य इत्याह—विषये चेति ॥ प्रमुषिते नष्टे स्वविश्रान्तं स्वात्मनि संस्काररूपेण विलीनमित्यर्थः। देवः आत्मा अप्रमुषितः अनन्तर्हितः ॥ १४ ॥

**प्रमोषणं प्रमातॄणां मायया तमसा कृतम् ।**
**मायाविद्ये प्रभोः शक्ती भानोश्छायाप्रभोपमे ॥१५॥**

कथं देवोऽप्रमुषितः सदैवेति उच्यते ? तस्य सुषुप्तिप्रलययोः प्रमोषणसम्भवादित्यत आह—प्रमोषणमिति ॥ मायिकमेवात्मनः प्रमोषणं न पारमार्थिकम् । तच्च विशेषाकारानवभासमात्रं न स्वरूपनाशरूपम् । तस्मादविद्यातत्कार्योपाध्यविवेकादुपाधिषु प्रलीयमानेषु आत्मापि प्रलीनो नष्ट इति भ्रम इत्यर्थः । मायारूपोपाधेरात्मावरणस्य अनादिभावरूपत्वेन अनुच्छेद्यत्वादात्मनो मोक्षाभावप्रसङ्ग इत्याशङ्क्य विद्यापोद्यत्वान्मायायाः अविद्यामात्रत्वात् तस्याश्च अनिर्वचनीयत्वान्नोक्तदोष इत्यभिप्रेत्य मायाविद्ययोरेकत्र पूर्वापरभावेन सङ्गतिमाह—मायाविद्ये इति । प्रभोरात्मनः ईश्वरस्य शक्ती सामर्थ्ये, आभ्यां बन्धमोक्षौ स्वात्मनि अनुभवति इत्यनयोः शक्तित्वमुपचारादुच्यते, न वस्तुतः; यतोऽसङ्गस्य अलुप्तप्रकाशस्वभावस्य अविद्यात्मकमायाश्रयत्वं व्याहतं, ज्ञानस्वरूपस्य च आगन्तुकज्ञानानपेक्षत्वात् तदाश्रयत्वायोगः । अत्र दृष्टान्तमाह—भानोरिति । छाया राहुः । यथा राहुर्वस्तुतो भान्वसम्बद्धोपि तत्सम्बन्धितया प्रतीयमानः तदाच्छादकः एवं मायापि वस्तुतः आत्माऽसम्बन्धिन्यपि आत्मतत्त्वाच्छादिका । प्रभादृष्टान्तस्तु स्वरूपस्यैव सतः केनचिन्निमित्तेन धर्मित्वव्यवहारसिद्ध्यर्थः ॥ १५ ॥

**सर्वानाच्छादयेन्माया, विद्या व्याक्षिप्य दर्शयेत् ।**
**प्रत्यभिज्ञैव सर्वेषां प्रमाणानां च साधनम् ॥ १६ ॥**

उक्तयोर्मायाविद्ययोः कार्यमाह—सर्वानिति ॥ प्रमातॄनित्यर्थः । व्याक्षिप्य व्यावृत्य । उद्वास्येत्यर्थः । कथं सर्वावरणभूतां मायामपावृत्य जीवानां तत्त्वं विद्या दर्शयेत्, तस्याः जडत्वात् । जडा हि विद्या, अ-

न्तःकरणवृत्तिरूपत्वात् तस्याः इत्याशङ्क्याह—प्रत्यभिज्ञैवेति। सर्वेषां प्रमाणानां, चकारादप्रमाणानां च साधनं साधकं प्रत्यभिज्ञैव, प्रत्यभिज्ञायते सर्वेष्ववभासेष्वनुस्यूततयावगम्यत इति प्रत्यभिज्ञासाक्षी स एव सर्वविज्ञानसाधक इत्यक्षरार्थः। विद्यायास्स्वरूपतो जडत्वेप्यशेषविज्ञानाधिष्ठानसाक्षिचैतन्यव्याप्ततया तप्तायःपिण्डवदापन्नप्रकाशत्वात् सा मायानिवारणसमर्थेति भावः। यद्वा—कथमवगम्यते, विद्या व्याक्षिप्य दर्शयेत्' इति ? तत्राह—प्रत्यभिज्ञैवेति। सर्वेषां प्रमाणानां प्रमाणवृत्तीनां या प्रत्यभिज्ञा इदमज्ञासिषमहमित्याकारा सा साधनं विद्यारूपप्रमाणवृत्तिस्वभावसाधकं, विद्याया विषयावरणतिरोधानसामर्थ्यप्रत्यायकमित्यर्थः। अथ वा--केयं विद्या? या अविद्यां व्याक्षिप्य सर्वेषां तत्त्वं प्रदर्शयेदित्याकाङ्क्षायामाह--प्रत्यभिज्ञैवेति। प्रतिप्रत्ययं प्रतिविषयं च प्रकाशकतया प्रत्यभिज्ञायते प्रकर्षेणाभितोनवच्छेदेन ज्ञायते यः प्रत्यगात्मा साक्षी सा पत्यभिज्ञा, यतः सर्वप्रमाणानां साधनं सर्वप्रमाणवृत्तान्ताभिज्ञानात्मकमित्यर्थः ॥१६॥

ईश्वरोन्योहमप्यन्य इति विच्छेदकारिणीम्।
व्याक्षिप्य विद्यया मायामीश्वरोहमिति स्मृतिः॥१७

तामेव प्रत्यभिज्ञां स्वरूपतो निर्दिशति—ईश्वरोन्य इति॥ स्मृतिः प्रत्यभिज्ञेति शेषः। यद्वा—मायास्वभावमनूद्य तस्याः विद्ययापबाधने सति स्वयमेव स्वरूपाविर्भावः प्रत्यभिज्ञेति दर्शयति—ईश्वरोन्योहमिति॥ १७॥

ईषत्प्रकाशोऽभूदीशो माययवनिकावृतः।
सम्यगावरणापाये सहस्रांशुरिव स्फुरेत्॥ १८॥

विद्यया अविद्यामात्रं बाध्यते न स्वरूपं प्रकाश्यत इत्येतत्प्रपञ्चयति—ईषत्प्रकाश इति ॥ मायैव यवनिका तिरस्करिणी । मेघावरणापाये यथा सहस्रांशुः सूर्यः सदा स्वसिद्धप्रकाशेनैव स्फुरति, एवं मायावरणस्य विद्ययापाये जाते स्वतस्सिद्धप्रकाशेनैवात्मा स्फुरेत् । तथा च पूर्वसिद्धस्फुरणेनै[1]व यथावत्स्वरूपाभिव्यक्तिमात्रं प्रत्यभिज्ञेत्यभिप्रायः ॥ १८ ॥

**न कारणानां व्यापारात् प्रमाणानां न वा पुनः ।**
**प्रत्यभिज्ञापनं नाम मोहापसरणं परम् ॥ १९ ॥**

कथं पूर्वसिद्धस्वरूपमात्रं प्रत्यभिज्ञानमुच्यते, आगन्तुकमेव किञ्चिद्धर्मरूपं कथं नेष्यत इत्याशङ्क्य, तत्किं कारणव्यापारात् प्रमाणव्यापाराद्वा स्यादिति विकल्प्य क्रमेण निराकरोति—न कारणानामिति ॥ कारणव्यापारादुत्पाद्या न प्रत्यभिज्ञा, न पुनः प्रमाणव्यापारात् ज्ञाप्येत्यर्थः । किन्तर्हि ? मोहापसरणं परम् अभिव्यक्तिकारणमित्यर्थः ॥ १९ ॥

**यावन्ति सन्ति मानानि व्यवहारप्रवृत्तये ।**
**तेषां मोहापसरणात् व्यापारोन्यो न विद्यते ॥२०॥**

विद्यया आत्मावभासः स्वतस्सिद्धः, आवरणतिरोधानमेव मानकृत्यमित्येतत्सर्वप्रमाणसाधारण्यप्रतिपादनेन साधयति—यावन्ति सन्तीति ॥ अयं भावः—अयं घट इत्येवं प्रमाणेनावभासमाने घटे प्रमाणजनितातिशयः किमपूर्वधर्मोपजनिः ? किं वा तद्गतयत्किञ्चिन्निवृत्तिः ? इति विवेक्तव्यम् । आद्येपि, किं स्फुरणरूपस्य ? किं वा ज्ञाततादिरूपस्य ? नाद्यः, स्फुरणस्य चेतनतया[2] जडे घटे जन्मानुपपत्तेः, घट-

(१) स्फुरणेन यथेति पाठान्तरम् । (२) चेतनाया इति पाठान्तरम् ।

ज्ञानवानहमिति ज्ञातरि प्रमाश्रयत्वानुभवानुपपत्तेश्च । जानातिक्रियायाः ज्ञातृगामित्वेपि फलस्य प्रमायाः विषयगतत्वमेव वक्तव्यं, घटस्तिष्ठतीतिवत् घटः स्फुरतीति स्फुरणस्य घटकर्तृकत्वप्रतीतेरिति चेत्; मैवं, घटो मम स्फुरतीति ज्ञातुरेव स्फुरणधर्मवत्त्वानुभवात् । ज्ञातारो हि ममेदानीमिदं स्फुरति न स्फुरतीति वा व्यवहरन्ति, नार्थः कदाचिदपि । किञ्च—अनुभवस्य स्वाश्रय एव संस्कारजनकत्वनियमात् संस्काराश्रय एव स्मृत्युत्पत्तिनियमाच्च ज्ञातरि विषयस्मरणाभावप्रसङ्गः स्यात् । तथा च ज्ञातुरर्थस्मृत्यभावात् तस्य तद्विषयव्यवहारलोपाज्जीवनमपि दुर्घटमित्यनाशङ्कनीय एवायं पक्षः । न द्वितीयः ; ज्ञातता नाम द्रव्यं; गुणो वा, कर्म वा, सामान्यं वा, यत् विषये ज्ञानेन जन्यत इत्यभ्युपगम्यते । सर्वथापि नोपपद्यते । एषामतीन्द्रियत्वे तदाधारो विषयोपि न स्फुरेदिति ज्ञातो मया[1] घट इति व्यवहारानुदयप्रसङ्गः । इन्द्रियग्राह्यत्वे तु घटगतालोकरूपादिवदन्यवेद्यतापि स्यात् । किञ्च—अत्र स्वजनकज्ञानेन ज्ञाततावभासते? ज्ञानान्तरेण वा ? नाद्यः, जन्मावभासयोर्यौगपद्या[2]भावात् । क्रमेण तु ज्ञानस्य विरम्यव्यापारवत्त्वानुपपत्तेः । ज्ञानान्तरेणावभासमाने तस्यापि ज्ञातान्तरोत्पादकत्वो[3]पक्षयादनवस्थाप्रसङ्गः । तस्मान्न ज्ञानेन विषये कश्चिदपूर्वधर्मोपजनिः क्रियत इति स्थितम् । तर्ह्यस्तु आत्मन्येव स्फुरणोत्पत्तिर्ज्ञानजन्योतिशयः, तार्किकैरपि तथाङ्गीकारादिति चेत् ॥ एतदपि न सम्यगिव॥घटः स्फुरतीति स्फुरणस्य घटत्वसामानाधिकरण्यानुभवविरोधात् । स्फुरणस्य[4]घटासंसर्गित्वे परावगत इव 'ज्ञातो

---

(१) मयेति नास्ति क्वचित् । (२) द्यायोगादिति पाठान्तरम् । (३) त्पाद एवोपक्षयेति पाठान्तरं युक्तम् । (४) टासंसर्गोपगेति क्वचित्पाठः ।

मया घटः' इति स्वात्मनि ज्ञातृज्ञेयसम्बन्धावभासो न स्यात्, विशेषाभावात्। स्वेन्द्रियसंसृष्टत्वं विशेष इति चेत्, न। तस्यातीन्द्रियत्वेन तत्सम्बन्धताया अनवगमात्, तन्निबन्धनस्य ज्ञेयसम्बन्धस्यात्मनि प्रत्यक्षत्वायोगात्। आश्रयात्मज्ञानद्वारा विषयसम्बन्धो ज्ञानस्येत्यपि नोपपद्यते, तस्य सर्वगतात्माश्रयत्वे सर्वसंसर्गित्वादात्मनो युगपत्सर्वावभासप्रसङ्गात्। देहावच्छिन्नात्माश्रयत्वे देहाद्बहिस्सम्बन्धाभावात् बहिर्विषयानवभासप्रसङ्गः। किञ्च—विषये वात्मनि वोत्पद्यमानं ज्ञानं प्रागसदुत्पद्यते ? नाद्यः, असतः सत्तासम्बन्धानुपपत्तेः। सत्तासम्बन्धो हि समवायः, सतोरेव धर्मोऽभ्युपगतः, न सदसतोर्वा, असतोर्वा। स्वकारणसम्बन्धः, उत्तरक्षणसम्बन्धो वा सर्वोऽपि भावधर्म एवेति असदयोगः समान एव। सिद्धं भूत्वा संबध्यत इत्यभ्युपगमे त्वन्योन्याश्रयः, उक्तसम्बन्धिसम्बन्धात्प्राक्सिद्धतानुपपत्तेः। उपपत्तौ वा, सत्कार्यवादापातात्। तथा च सिद्धे सत्तादिसम्बन्धे स्वरूपसिद्धिः, तस्मिन्[१] सिद्धे इतरसिद्धिरिति परस्पराश्रयो दुर्वार इति नासदुत्पद्यते। नापि सदुत्पद्यते, सिद्धस्य साध्यत्वव्याघातात्। नापि सदसदात्मकमुत्पद्यते, विरुद्धस्वभावस्य वस्तुनोऽसम्भवात्। अत एव न सदसद्विलक्षणमप्युत्पद्यत इति। तस्मान्नापूर्वधर्मोत्पत्तिरात्मनि विषये वा सम्भवति॥ नापि विषयगतयत्किञ्चिन्निवृत्तिर्ज्ञानकृतोऽतिशयः परमार्थो युज्यते। तथा हि—सतो ज्ञानेन निवृत्तिस्तावन्न सम्भवति, ज्ञानस्यारोपितमात्रनिवृत्तिसाधनसामर्थ्यस्यैव सर्वत्रोपलम्भात्, यथा शुक्तितत्त्वज्ञानमारोपितरजतं तद्विशिष्टं चाज्ञानं निवर्तयति, न शुक्तिगतमलमपि[२]। उत्तरज्ञानेन पूर्व-

(१) तत्सिद्धाविति पाठः क्वचित्। (२) गतमन्यमपीति पाठान्तरम्।

ज्ञानस्य सतोपि निवृत्तिर्दृश्यत इति चेत्, न ज्ञानस्योत्पन्नस्य विनापि ज्ञानान्तरोदयं स्वरसत एव निवृत्तिदर्शनात्। कदाचिद्भवदप्युत्तरज्ञानं न तन्निवर्तकम्। अन्यथा सुषुप्त्यभावप्रसङ्गात्। प्रमाणसिद्धं हि सदित्युच्यते। तच्च न प्रमाणान्तरेण बाधितुं शक्यते, बाध्यविषयकस्याप्रमाणत्वनियमात्। तस्मान्न सन्निवृत्तिः प्रमाणफलम्। नाप्यसन्निवृत्तिः, असतो नित्यनिवृत्तत्वात्। प्रागभावस्यासतोपि प्रतियोग्युत्पत्त्या निवृत्तिर्दृश्यत इति चेत्, न। अभावस्य ध्वंसप्रतियोगित्वे भावत्वापत्तेः। निवृत्तिर्हि ध्वंसः, स भावधर्मः, न त्वभावधर्मः। तस्मान्नासन्निवृत्तिरपि ज्ञानसाध्या। नापि सदसन्निवृत्तिः सम्भवति, सदसदात्मकस्याभावादेव। तस्मात्परिशेषादनिर्वचनीयस्य[1] कस्यचिदनिर्वचनीयेन निवृत्तिरिति मोहनिवृत्तिमात्रं प्रमाणकृत्यमिति सिद्धमिति ॥ २० ॥

**जडानृतपरिच्छिन्नदेहधर्माश्चिदात्मनि ।**
**सत्यज्ञानसुखात्मत्वं मोहाद्देहेपि कल्प्यते ॥ २१ ॥**

यत एवं सर्वप्रमाणानां स्वस्वविषयाज्ञानरूपमोहनिवर्तकत्वं स्वभावः, तस्मादात्मन्यपि वेदान्तवाक्यजनितवृत्तिरूपं प्रमाणं तद्गतानाद्यनिर्वचनीयाज्ञानरूपमोहनिवृत्त्या तत्कार्यदेहादिबन्धनिवृत्तिमात्रं करोति, नाधिकमाचरतीत्येतदेव विशदयितुं देहात्मनोः परस्पराध्यासनिबन्धन एव संसारबन्धो, न परमार्थ इति दर्शयति—जडानृतेति॥ २१ ॥

**शुक्तौ रजतमित्येवं यथा व्यामुह्यतेन्यथा ।**
**सदेव रूप्यं चेद्भाति विलयस्ते न सिध्यति ॥२२॥**

उक्ते देहात्मनोरन्योन्यस्मिन् अन्योन्यधर्माध्यासे दृष्टा-

---

(१) नीयस्यैव निवृत्तिरितीति पाठान्तरं युक्तम्।

न्तमाह—शुक्तौ रजतमिति ॥ व्यामुह्यते। लोक इति शेषः। वस्तुगत्या शुक्त्यादौ अरजते रजतमित्यन्यथा अनिदमित्यरजते इदं रजतमिति च[1] एवं परस्पराध्यासरूपं व्यामोहं प्राप्नोति लोक इत्यर्थः ॥ शुक्तौ भासमानस्य रजतस्यानिर्वचनीयत्वोपपादनेन मायामयत्वं साधयति—सदेवेति। ते तव मते सदेव चेद्रूप्यं शुक्तौ भाति, तदा तस्य विलयो बाधो न सिध्यतीति योजना। उक्तं चैतद्भगवता—'नाभावो विद्यते सतः' इति ॥ २२ ॥

**नात्यन्तासत्प्रकाशेत नरशृङ्गादिवत्क्वचित्।**
**कान्ताकरादौ रजतमिति स्यात्स्म[3]रणं भ्रमे ॥२३॥**

सत्त्वनिषेधात् प्राप्तमसत्त्वं प्रत्याचष्टे—नात्यन्तासदिति॥ प्रत्येकं सदसत्पक्षदूषणोपजीवनेन वृत्तस्य सदसत्समुच्चयपक्षस्योपजीव्यनिषेधादेव निषेधसिद्धेः सोऽप्यर्थान्निषिद्धो वेदितव्यः॥ नन्वन्यसम्प्रयोगेऽन्यविषयकज्ञानं स्मृतिरेव नानुभवः, अतः कुतो भ्रान्तिः? इति प्राभाकरमतमाशङ्क्य अस्य स्मरणाकारवैपरीत्यान्न स्मरणमिदमित्याह—कान्ताकरादाविति। यदिदं पूर्वदृष्टमेव भासेत, तदा यत्र दृष्टं तत्रत्यमित्ये[4]वं तदवभासेत, नेदमिति। दोषवशात् तत्ताप्रमोषात्तथा नावभासत इति चेत्, तर्हि तत्ताप्रमोषे स्मृतित्वस्यैवानिश्चयात् यथावभासमनुभवत्वोपपत्तेर्नाख्यातिवा[5]दाद्यवकाश इति भावः ॥ २३ ॥

**तेनेदं तुल्यमित्येवं स्यात्सादृश्यात्तु विभ्रमः।**
**पीतः शङ्खो गुडस्तिक्त इत्यादौ नास्तितुल्यता ॥२४॥**

(१) ति चैवं परेति पाठान्तरं युक्तम्। (२) भगव. २-१६. (३) रणाक्रम इति पाठान्तरं युक्तम्। (४) त्येवं तदेति पाठान्तरं युक्तम्। (५) वादावकेति पाठान्तरम्।

ननु मा भूत्स्मर्यमाणता रजतस्य, तथापि मायामयत्वं न सिध्यति, पूर्वदृष्टरजतसादृश्यसन्दर्शनात् तत्संस्कारसमुद्बोधे स्मृतरजतस्य पुरोवर्तिन्यारोपे रजतमिदमिति प्रतीतिसम्भवात्, स्मर्यमाणरजताभेदेन शुक्तिकाया एव रजतात्मत्वानुभवा[1]द्वा, इत्यन्यथाख्यातिवादिनां मतद्वयं क्रमेणानूद्य दूषयति—तेनेदमिति॥ यदि रजतसादृश्याद्विभ्रमो भवेत्, तदा तेन रजतेनेदं पुरोवर्ति सदृशम् इति वा अनेन तत्सदृशम् इति वा विभ्रमोल्लेखः स्यात्, न त्विदं रजतमितीत्यर्थः। किञ्च—सादृश्यात् भ्रमं वदन् प्रष्टव्यः—किं विभ्रमस्य सादृश्यं व्यापकं, व्याप्यं वा इति? तत्र नाद्य इत्याह—पीतः शङ्ख इति। तुल्यता सादृश्यम्। न द्वितीयः, शुक्तिकायाः शुक्तिकान्तरसादृश्ये सत्यपि तद्विभ्रमोदयादर्शनादिति द्रष्टव्यम्॥ २४॥

**तादात्म्येन स्फुरति चेद्रजतत्वेन शुक्तिका।**
**विभ्रमो निरधिष्ठाने बाधो निरवधिर्भवेत्॥ २५॥**

द्वितीयमन्यथाख्यातिमतं दूषयति—तादात्म्येनेति। शुक्तिरजतयोस्तादात्म्यं चेत् विभ्रमालम्बनं, तदोभयोरध्यस्तत्वान्मिथ्यात्वे सति सत्यस्य वस्तुनोन्यस्याभावात् शून्यवादापातप्रसङ्ग इत्यर्थः[2]। "तिमिरान्धकदृष्टीनां यथा केशोण्डूकादि खे। स्फुरत्येवं जगद्रूपमनात्मन्येव तिष्ठति" इति वासिष्ठे। विभ्रमाणामपि दृश्यमानालोकाधिष्ठानकत्वस्यान्यत्र निरूपितत्वात् न निरधिष्ठानविभ्रमे, निरवधिबाधे वोदाहरणमस्तीति नायं शून्यवादिनोपीष्टप्रसङ्ग इति॥ असत्ख्यातिरप्यनेन निराकृतेति वेदितव्या॥ २५॥

(१) नुभवसंभवाद्वेति पाठान्तरम्। (२) इत्यर्थः। केशोण्डकादिविभ्रमाणामपीति पाठान्तरम्।

बुद्धिस्थितं चेद्रजतं बाह्यत्वेन प्रतीयते ।
गुञ्जादौ ज्वलनारोपे देहदाहः प्रसज्यते ॥ २६ ॥

इदानीमात्मख्यातिपक्षमपि निराकरोति—बुद्धिस्थितमिति ॥ २६ ॥

युक्तिहीनप्रकाशत्वाद् भ्रान्तेर्न ह्यस्ति लक्षणम् ।
यदि स्याल्लक्षणं किञ्चिद्भ्रान्तिरेव न सिद्ध्यति॥२७॥

यदि क्वचित्कथञ्चित् सद्रजतं न भासते, अत्यन्तासदपि न भासते चेत्किमिदमलौकिकं किञ्चिदुच्यते बुद्ध्यनारूढमेव शुक्तौ रजतमित्येवमित्याशङ्क्य केनापि रूपेण रूपवत्त्वे प्रामाणिकत्वेन ज्ञानापनोद्यत्वासम्भवात् रजतज्ञानस्य भ्रान्तित्वप्रसिद्ध्यनुपपत्तिः स्यादित्यभिप्रेत्याह–युक्तिहीनेति ॥ २७ ॥

जलचन्द्रवदेकस्मिन् निर्भये रज्जुसर्पवत् ।
प्रतीयते यथा स्वर्णे कारणे कटकादिवत् ॥ २८ ॥

दृष्टान्ते मायामयत्वमुपपाद्य दार्ष्टान्तिकेपि मायामयत्वं सिद्धमनेन दृष्टान्तान्तरानुवादेन उपसंहरति—जलचन्द्रवदिति–सार्धद्वयेन ॥ एकस्मिन् चन्द्रे जलोपाधिभेदाद्यथा अनेकत्वं एवमेकस्मिन् चिदानन्दाद्वयात्मनि देहोपाधिभेदादनेकत्वमवभासत इत्यादिदृष्टान्तार्थो विवक्षितः । निर्भये भयहेतुत्वरहिते चिदात्मनि रज्जुसर्पवत् संसारभयावभास इति द्वितीयदृष्टान्तार्थः । एकस्मिन्ननेकत्वं प्रतीयते, निर्भये भयं प्रतीयत इति च योजना । कार्यकारणवादं लोकप्रसिद्धमाश्रित्य कारणादन्यत् कार्यं नास्तीत्यत्र दृष्टान्तमाह—

यथा स्वर्ण इति । कटकादिवदिति । स्वार्थिको[1] वतिप्रत्ययः कटकासत्यत्वार्थः ॥ २८ ॥

**उपात्ते रूप्यवच्छुक्तौ व्याप्ते यक्षपुरीव खे ।**
**रश्म्यम्बुवत्स्फुरद्रूपे स्थाणौ चोरवदक्रिये ॥ २९ ॥**
**असत्कल्पमिदं विश्वं आत्मन्यारोप्यते भ्रमात् ।**

इदानीं श्रुतियुक्तिभ्यां निर्णीतं विवर्तवादमाश्रित्याधिष्ठानात् पृथक्सत्त्वं न दृश्यस्यास्ति, किन्त्वधिष्ठाने भ्रान्तिसिद्धं जगदित्यत्र दृष्टान्तद्वयमाह—उपात्त इति ॥ शुक्तौ रूप्यवत् उपात्ते स्वयमेव सिद्धे चिदात्मनीदं विश्वमसत्कल्पमित्यन्वयः । व्याप्ते अपरिच्छिन्ने कूटस्थे चिदात्मनि, खे 'यक्षपुरीव' गन्धर्वनगरमिव विश्वमिति; तथैव सर्वत्रान्वयः ॥२९॥ असत्कल्पमिति॥स्वयम्प्रकाशतया स्फुरद्रूपे चिदात्मनि रश्म्यम्बुवत्, मरुमरीचिषूदकविभ्रमवत्, 'अक्रिये' निर्व्यापारे चिदात्मनि व्यापारवत्त्वाध्यासः स्थाणौ चोरत्वाध्यासवदित्यर्थः । 'भ्रमात्' मिथ्याज्ञानात् 'आरोप्यते' व्यवह्रियत इत्यर्थः ॥

**स्वयम्प्रकाशं सद्रूपं भ्रान्तिबाधविवर्जितम् ॥ ३० ॥**
**प्रत्यभिज्ञायते वस्तु प्राग्वन्मोहे व्यपोहिते ।**

तथा च जीवभेदस्य बाह्यप्रपञ्चस्य चाविद्यामात्रत्वाद्विद्यया तद्बाधे अद्वैतानन्दब्रह्मरूपः आत्मा अवभासत इत्युपसंहरति—स्वयम्प्रकाशमिति ॥ 'भ्रान्तिबाधविवर्जितम्' अनामापायधर्मकमित्यर्थः[2] ॥३०॥ प्रत्यभिज्ञायत इति ॥ वस्तु परमार्थं

---

(१) स्वार्थे तद्धितः । कटकादीत्यर्थः इति पाठान्तरम् । (२) अनागमापेति पाठान्तरं युक्तम् ।

मोहे व्यपोहिते तत्त्वज्ञानेन अज्ञाने बाधिते सति प्राग्वद्यथावस्थितस्वरूपं प्रत्यभिज्ञायते साक्षाक्रियत इति योजना ॥

**देहाद्युपाधौ निर्धूते स्यादात्मैव महेश्वरः ॥ ३१ ॥**

कारणाविद्याबाधात् कार्यबाधे सति आत्मतत्त्वब्रह्मस्वरूपावभासप्रतिबन्धाभावात्तदात्मैवेश्वरत्वोपलक्षितं ब्रह्म भवतीत्याह—देहाद्युपाधाविति ॥ ३१ ॥

**स्मृतिः प्रत्यक्षमैतिह्यमित्यादीन्यपराण्यपि ।**
**प्रमाणान्याप्तवागाह प्रत्यभिज्ञाप्रसिद्धये ॥ ३२ ॥**

युक्त्योपपादितेर्थे प्रमाणान्याह—स्मृतिरिति ॥ 'क्षेत्रज्ञञ्चापि मां विद्धि'[1] 'न च मत्स्थानि भूतानि पश्य मे योगमैश्वरम्'[2] इत्याद्या–'स्मृतिः'। 'प्रत्यक्षं' ब्रह्माहमस्मीति विद्वदनुभवः । 'ऐतिह्यं' गुरूपदेशवाक्यं तत्त्वमसीति । आदिशब्देनानुमानं गृह्यते । जीवेश्वरौ, न तत्त्वतो भिन्नौ, एकस्वभावत्वे सति उपाधिपरामर्शमन्तरेणाविभाव्यमानभेदवत्त्वात्, आकाशवदित्याद्यनुमानम् । न च विशेषणासिद्धिः, 'सत्यं ज्ञानं'[3] 'प्रज्ञानघन एवं' इत्युभयोश्चित्स्वभावताश्रवणादिति ॥ आप्तवागाहेति ॥ 'स्मृतिः प्रत्यक्षमैतिह्यम् अनुमानं चतुष्टयम् । एतैरादित्यमण्डलं सर्वैरेव विधास्यते' इति श्रुतिराहेत्यर्थः । आदित्यमण्डलमित्यध्यात्ममधिदैवं च अक्ष्यादित्यमण्डलोपलक्षितं प्रत्यग्ब्रह्मतत्त्वं विधास्यत इत्युदाहृतश्रुत्यर्थः ॥ प्रत्यभिज्ञाप्रसिद्धय इति ॥ अहं ब्रह्म ब्रह्मैवाहमिति ब्रह्मात्मनोरेकत्वप्रसिद्धय इत्यर्थः ॥ ३२ ॥

---

(१) भगव. १३-२। (२) भगव. ९-५. । (३) तै. उ. २-१. ।
(४) माण्डू. ५. (५) तै. अ. १-२।

इति श्रीदक्षिणामूर्तिस्तोत्रार्थप्रतिपादके ।
प्रबन्धे मानसोल्लासे सप्तमोल्लाससंग्रहः ॥ ३३ ॥

सप्तमश्लोकव्याख्यामुपसंहरति—इतीति ॥ ३३ ॥ ७ ॥

इति श्रीमानसोल्लासवृत्तान्ते सप्तमोल्लासः ॥ ७ ॥

---

अथाष्टमोल्लासः-

प्रकाशव्यतिरेकेण पदार्थः कोपि नास्ति चेत् ।
परमार्थोपदेशान्तो व्यवहारः कथं भवेत् ॥ १ ॥

इदानीमुक्तस्यैव सर्वशास्त्रार्थस्योपसंहारार्थमुत्तरश्लोकः, तमुत्थापयति-प्रकाशव्यतिरेकेणेति ॥ वस्तुगत्या कालत्रयेपि चित्प्रकाशव्यतिरेकेण कोपि पदार्थो भूतभौतिकरूपो नास्ति चेत्, तदा परमार्थोपदेशान्तो गुरोस्तत्त्वज्ञानग्रहणोपदेशात् प्राक्तनो व्यवहारः संसाररूपः[1] किमालम्बनः स्यादित्यर्थः ॥१॥

कस्य बन्धश्च मोक्षश्च बध्यते केन हेतुना ।
मायाया लक्षणं किं स्याद् इत्येवं परिपृच्छतः ॥२॥
प्रश्नः स्यादुत्तरं वक्तुं प्रतिपत्तुं सुखेन च ।
उक्तोर्थः सप्तभिः श्लोकैः पुनः संक्षिप्य कथ्यते ॥३॥

न केवलमेतावत्, अन्यदप्यस्ति दुर्घटमित्याह—कस्येति॥ बन्धाभावे कस्य मोक्षोपि, बन्धनिवृत्तिरूपत्वात्तस्येत्यर्थः । एतत्सर्वं मायामयमिति चेत्, तर्हि किंलक्षणा सेति वक्तव्यमित्याह—मायाया इति ॥ इत्येवं परिपृच्छतः प्रश्नः 'स्यात्'

---

( १ ) संसरणरूप इति पाठान्तरं युक्तम् ।

भवेत् इति । सम्भावनायां लिङ् । एतस्य प्रश्नस्योत्तरं वक्तुं गुरुणा शिष्येण च सुखेन प्रतिपत्तुं च पूर्वं सप्तभिः श्लोकैरुक्तोर्थः पुनरस्मिन्नष्टमे श्लोके संक्षिप्य कथ्यत इति योजना॥२॥३॥

पौनरुक्त्यं न दोषोत्र शब्देनार्थेन वा भवेत् ।
अभ्यासे हि[1] गरीयस्त्वमर्थस्य प्रतिपद्यते ॥ ४ ॥

तत्राप्यशेषशास्त्रार्थश्चेत्[2] सप्तभिः श्लोकैः निर्णीतः, तदा पुनः कथनं निरर्थकमित्याशङ्क्याह—पौनरुक्त्यमिति ॥ अत्रास्मिन् शास्त्रे पौनरुक्त्यं न दोषः, प्रतिपाद्यवस्तुनः अतिसूक्ष्मत्वेन सकृदेव दुरधिगमत्वादित्यर्थः । 'अर्थस्य' ब्रह्मात्मवस्तुनः 'गरीयस्त्वं' श्रुतितात्पर्यगोचरत्वम् ॥ ४ ॥

"विश्वं पश्यति कार्यकारणतया स्वस्वामिसम्बन्धतः
शिष्याचार्यतया तथैव पितृपुत्राद्यात्मना भेदतः ।
स्वप्ने जाग्रति वा य एष पुरुषो मायापरिभ्रामितः
तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥८॥

विश्वमिति ॥ 'य एषः' पुरुषः कार्यकारणभावेन, स्वामिभृत्यभावेन वा, शिष्याचार्यतया वा, तथा पितृपुत्रभ्रातृदुहितृमातुलश्वशुराद्यात्मना वा, येन केनापि प्रकारेण देवतिर्यङ्मनुष्यादिरूपेण च 'भेदतः' भेदवत्तया स्वप्ने जाग्रति वा विश्वं पश्यति 'मायया' अनाद्यनिर्वचनीयया अज्ञानात्मिकया 'परिभ्रामितः' मोहितः आच्छाद्य विक्षिप्तः सन् न परमार्थतः, तस्मै प्रत्यग्रूपाय तत्त्वज्ञाननिवृत्तमायाविभ्रमाय, श्रीगुरुमूर्तय इति उक्तार्थम् ॥ ८ ॥

---

(१) सेन गेति पाठान्तरम् । (२) तत्राशेषशास्त्रार्थस्य चेत् सप्तश्लोकैर्निर्णयः तदेति पाठान्तरम् ।

अस्यायमभिसन्धिः-

स्वयम्प्रकाशे सद्रूपेऽप्येकस्मिन् परमेश्वरे ।
कार्यकारणसम्बन्धाद्यनेकविधकल्पना ॥ ५ ॥

श्लोक (वाक्यार्थ) व्याख्यां प्रतिजानीते–अस्यायमभिसन्धिरिति ॥ एकस्मिन्नेव अखण्डानन्दचिदात्मनि यावद्विद्यया अविद्या नापोह्यते, तावत्सर्वो व्यवहारः। अविद्या, माया, अव्यक्तम्, इत्यभिधानाभिधेयानाद्यनिर्वचनीयाज्ञानविलसितप्रपञ्चालम्बनो न विरुध्यत इत्यभिप्रेत्याह—स्वयम्प्रकाश इति ॥५॥

राहोश्शिरः सुषिः खस्य ममात्मा प्रतिमावपुः ।
इत्यादिकल्पनातुल्या न पृथग्वस्तुगोचरा ॥ ६ ॥

एकमप्यनेकधा व्यवहारास्पदं भवतीत्यत्र दृष्टान्तमाह—राहोरिति॥'खस्य' 'आकाशस्य' सुषिः। छिद्रं, 'प्रतिमावपुः' प्रतिमायाः शरीरम्, इत्येवमादिकल्पनातुल्या कार्यकारणादिरूपेण प्रपञ्चभेदकल्पना (च), न तत्त्वतः पृथग्वस्तुविषयेत्यर्थः ॥६॥

उपास्योपासकत्वेन गुरुशिष्यक्रमेण च ।
स्वामिभृत्यादिरूपेण क्रीडति[1] स्वेच्छयेश्वरः ॥ ७ ॥

"न तस्य कार्यं करणं च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते। परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च[2]" इति श्रुत्यर्थमनुसन्दधानो 'लोकवत्तु लीलाकैवल्यम्[3]' इति न्यायेन ईश्वर एव अनेकधा विभाव्यत इत्याह—उपास्योपासकत्वेनेति ॥ ७ ॥

---

(१) क्रीडते इति पाठान्तरम् । (२) श्वेताश्व. ६-८। (३) ब्रह्मसू. २-२-३ ३

पितरं प्रति पुत्रो यः पुत्रं प्रति पितैव सः ।
एक एव हि नानेव कल्प्यते शब्दमात्रतः ॥ ८ ॥

पितृपुत्रादिभावो नैकस्मिन् नियतो दृश्यते, अतोपि कल्पित एवेत्याह—पितरमिति ॥ पितृत्वादेः सापेक्षत्वान्न परमार्थः ॥ ८ ॥

तस्मात्प्रकाश एवास्ति परमार्थनिरूपणे ।
भेदप्रतीतिर्मिथ्यैव माययात्मनि कल्पिता ॥ ९ ॥

यत्सापेक्षमिहेक्ष्यते[1] तत् स्वप्नवन्मायायामेव, न परमार्थमित्युपसंहरति—तस्मादिति ॥ ९ ॥

मिथ्यात्वं नाम बाध्यत्वं सम्यग् ज्ञानोदये सति ।
शिष्याचार्योपदेशादि स्वप्नवत्प्रतिभासते ॥ १० ॥

यदुक्तं 'मायाया लक्षणं किं स्यात्' इति तदुत्तरमर्थाद्दर्शयन् 'भेदप्रतीतिर्मिथ्यैव' इत्युक्तस्य मिथ्यात्वस्य लक्षणमाह—मिथ्यात्वं नामेति ॥ तत्त्वज्ञानापनोद्यत्वं, बाध्यत्वं मिथ्यात्वमित्यर्थः । इदमेव मायायाः लक्षणम् । न हि प्रमाणसिद्धं प्रमाणज्ञानबाध्यं भवेत्, बाध्यत्वे तस्य प्रामणिकत्वव्याघातात् । बाधश्च यत्र यत्प्रतिपन्नं तत्रैव तस्य कालत्रयाभा(वा)वबोधव्यवहारयोग्यतया लीयमानत्वम् । विमतः शिष्याचार्यादिरूपो भेदप्रपञ्चो, वस्तुतः आत्मन्यन्यत्र वा न कालत्रयेप्यस्ति, यत्र यत्प्रतिपन्नं तत्रैव ज्ञानापनोद्यत्वात्, स्वप्नदृष्टप्रपञ्चवदित्यनुमानमाह—शिष्याचार्येति ॥ १० ॥

---

(१) हेप्स्यते इति पाठान्तरं युक्तम् ।

**मिथ्याभूतोपि वेदान्तः सत्यमर्थं प्रबोधयेत् ।**
**देवताप्रतिमावच्च चित्रवत्प्रतिबिम्बवत् ॥ ११ ॥**

नन्वेवं सति प्रत्यग्ब्रह्मबोधकवेदान्तशास्त्रस्य कथं प्रामाण्यमित्यत आह—मिथ्याभूतोपीति ॥ स्वरूपेण मिथ्यात्वेपि वेदान्तस्य सत्यार्थज्ञापकत्वे दृष्टान्तमाह—देवतेति । यथा अदेवतायां प्रतिमायां अरोपितापि देवता पूजकस्य सत्यं फलं ददाति, न हि प्रतिमैव देवता, तथा सति तदुचितानेकलौकिकव्यापारवत्ताप्रसङ्गात् । 'चित्रवत्' यथा वा चित्रव्याघ्रगजादिः सत्यभयादिहेतुः बालस्य, यथा वा प्रतिबिम्बं बिम्बावदातता[1]दिसत्यबोधकं, तथा वेदान्तः स्वयं मिथ्याभूतोपि सत्यब्रह्मतत्त्वबोधक इत्यर्थः ॥११॥

**सर्वोपि व्यवहारोयं मायायाः परिजृम्भणम् ।**
**सुषुप्तिसदृशी माया स्वप्रबोधेन बाध्यते ॥ १२ ॥**

किं बहुना—सर्व एव व्यवहारो मायामय इत्यत्र न कोपि विघ्न इत्युपसंहरति—सर्वोपीति ॥ परिजृम्भणं विवर्तः । मायायाः स्वरूपं दृष्टान्तेन बुद्धिमारोहयति—सुषुप्तीति । 'स्वप्रबोधेन' आत्मावबोधेन वेदान्तजनितेन 'बाध्यते' अपलप्यत इत्यर्थः ॥ १२ ॥

**युक्तिहीनप्रकाशस्य संज्ञा मायेति कथ्यते ।**
**नासती दृश्यमाना सा बाध्यमाना न वा सती॥१३॥**

इदानीं मायायाः साक्षाल्लक्षणमाह—युक्तिहीनेति ॥ युक्तिहीनः प्रकाशः प्रतीतिमात्रं यस्य तस्या[2]ऽऽभासमानस्य मायेति

(१) बिम्बादिसेति पाठान्तरं युक्तम् । (२) तस्य सभानस्येति पाठान्तरं युक्तम् ।

संज्ञा कथ्यत इत्यर्थः। सर्वप्रकारयुक्त्यसहत्वे सत्यपि प्रकाशमानत्वं मायायाः लक्षणमित्यर्थः। तस्याः युक्तिशून्यप्रकाशत्वं साध्यते—नासतीति ॥ दृश्यमाना। अपरोक्षतयेति शेषः। न सती ॥ बाध्यमानत्वात् ॥ १३ ॥

**न प्रकाशादियं भिन्ना छायेवार्कस्य तामसी।**
**न चाभिन्ना जडत्वेन विरोधान्नोभयात्मिका ॥१४॥**

सदसद्विलक्षणत्वेपि भिन्नाभिन्नत्वाभ्यां सावयवनिरवयवत्वाभ्यां वा युक्तिं सहेतेत्याशङ्क्य निराकरोति—न प्रकाशादिति ॥ यथार्कस्य छाया 'तामसी' रात्रिरूपा अर्काद्भिन्ना न, तथेयमिति व्यतिरेकदृष्टान्तः। यद्वा—अर्कस्य छाया अर्काच्छादिका तामसी तमोदृष्टिभिर्दिवान्धैः आरोपिता नार्काद्भिन्ना यथेत्यर्थः। 'परास्य शक्तिः' इति श्रुतौ मायायाः आत्मशक्तित्वावगमात्, न हि शक्तिः शक्तिमतो भेदेन विभाव्यते। नापि चिदात्मनोऽभिन्ना, भिन्नाभिन्ना वा, जडत्वाद्भिन्नत्वाद्विषयत्वानुपपत्तिप्रसङ्गात्, जडाजडयोरेकत्वायोगाच्चेत्याह—न चाभिन्नेति ॥ १४ ॥

**स्वहेत्ववयवाभावान्नेयं सावयवोच्यते।**
**न चावयवहीना सा कार्येष्ववयवान्विता ॥ १५ ॥**

प्रकारान्तरमप्यपाकरोति—स्वहेत्ववयवाभावादिति ॥ अनादित्वादित्यर्थः। तस्या एव कार्याकारत्वात् कार्यस्य च सावयवत्वात् सैव कार्याकारेणावयवान्वितेत्यर्थः। न हि मायाविनिर्मितहस्त्यश्वादि निरवयवं भवतीति भावः ॥१५॥

(१) श्वेताश्व. ६-८। (२) कार्याकारित्वेति पाठान्तरम्।

**अविचारितसिद्धेयं माया वेश्या विलासिनी ।**
**पुरुषं वञ्चयत्येव मिथ्याभूतैः स्वविभ्रमैः ॥ १६ ॥**

अतः प्रकारान्तराभावात् सिद्धमस्याः युक्तिहीनप्रकाशत्वं लक्षणमित्युपसंहरति—अविचारितेति ॥ १६ ॥

**न तस्या मूलविच्छेदमभिवाञ्छन्ति केचन ।**
**तेषां पक्षे कथं मोक्षो मनसः सम्भविष्यति ॥ १७ ॥**

ये वेश्याविलासवञ्चिताः चपलेन्द्रियग्रामाः वेश्यामाया-विलासवञ्चिताः तां न जिहासन्ति, तान् शोचन्नाह—न तस्या इति ॥ मूलतो विच्छेदः सवासनानिवृत्तिः ॥ तदनिवृत्तौ[1] को दोष इति चेत्, संसारदुःखपरम्परायाः अनिवृत्तिरित्याह—तेषां पक्ष इति ॥ 'मनसो मोक्षः' मनसः सकाशान्मोक्षः मनोविल (ला)यो वा परमोपशमलक्षितपरमानन्दः तेषां कथं स्यादित्यर्थः ॥ १७ ॥

**तिस्रोप्यवस्था मनसो जाग्रत्स्वप्नसुषुप्तयः ।**
**चक्रवत्परिवर्तन्ते भेदभ्रान्त्येकहेतवः ॥ १८ ॥**

मनसो मोक्षाभावे कथं परमानन्दलाभ इत्यत आह—तिस्रोपीति ॥ मनसि सति तस्य मनसः तिस्रोपि जाग्रदाद्यवस्थाश्चक्रवत्परिवर्तन्ते, भेदभ्रान्तेः मुख्यकारणभूता इत्यर्थः। एतदुक्तं भवति—मनसो यदा बाह्येन्द्रियद्वारा बाह्यविषयाकारता भवति, तदा जाग्रदवस्था, यदा जाग्रद्दृष्टवासनामात्रतयान्तः प्रविशति, तदा स्वप्नावस्था, यदा पुनर्नाडीच्छिद्र-

(१) तदानिच्छायां को इति पाठान्तरम् ।

प्रचारं परित्यज्य स्वकारणे लीयते, तदाऽशेष(विशेष)वेद्यवेदनाकारप्रविलयात् सुषुप्तिर्भवति । एवं मनसः संचारात् भेदविभ्रमाः जायन्ते कर्तृक्रियाकारकफलाश्रया इति ॥१८॥

**ताभिः करोति कर्माणि पुनस्तैर्बध्यते मनः ।**
**मनसः केवलः साक्षी भानुवत्पुरुषः परः ॥ १९ ॥**

सति च भेदविभ्रमे किं स्यादिति तदाह—ताभिरिति ॥ भेदभ्रान्तिभिरित्यर्थः । कथं मनसः संसारवर्णनं क्रियते, आत्मन एव संसारित्वादित्यत आह—मनस इति ॥ मनसोनेकविकारिणः साक्षी पुरुषः केवलो निर्विकारो मनसः परोन्यो, यथा जगत्साक्षी भानुरित्यर्थः । साक्षिणोवस्थासंसारधर्मवत्त्वे तस्यापि साक्ष्यकोटिपतितत्वादसाक्षिकमवस्थात्रयं स्यादिति भावः ॥ १९ ॥

**यथा प्राणिकृतैरर्कः कर्मभिर्नैव बध्यते ।**
**तथा मनःकृतैरात्मा साक्षित्वान्नैव बध्यते ॥ २० ॥**

कर्मसाक्षित्वादेवायं पुरुषः कर्मभिः न लिप्यत इत्याह—यथा प्राणिकृतैरिति ॥ तथा च श्रुतिः 'सूर्यो यथा सर्वलोकस्य चक्षुः' इत्यादिः ॥ २० ॥

**आत्मा करोति कर्माणि बध्यते मुच्यते च तैः ।**
**इत्यौपचारिकी कृप्तिर्भ्रममात्रैव केवलम् ॥ २१ ॥**

यद्येवमकर्ता अभोक्ता चात्मा, कथं तर्हि तस्मिन्वादिनां लोकागमयोश्च कर्तृत्वादिप्रसिद्धिरित्याशङ्क्य जपाकुसुमादि-

---

(१) कठो. ५-११ ।

सन्निहिते स्फटिके लौहित्यावभासवत् कर्तृमनआदिसन्निध्युपाधिनिमित्तस्तस्मिन् कर्तृत्वाद्यवभासः, अविवेकाद्बादिलोकागमप्रसिद्धिरुपपद्यत इत्यभिप्रेत्याह—आत्मा करोतीति ॥२१॥

**धूमाभ्रधूलीनीहारैरस्पृष्टोपि दिवाकरः ।**
**यथा छन्न इवाभाति तथैवात्मापि मायया ॥ २२ ॥**

यद्यात्मनो मनआद्युपाधिसम्बन्धाद्यथावदप्रकाशः, तर्हि तस्य कथमसङ्गकूटस्थत्वादिस्वभावतेत्याशङ्कां दृष्टान्तेन प्रत्याचष्टे—धूमाभ्रेति ॥ 'मायया' मायातत्कार्यैरित्यर्थः॥ २२॥

**यथा लीलावशात्कैश्चिद्भ्राम्यमाणः कुमारकः ।**
**भ्रमांत्तत्पश्यति जगच्छतचन्द्रं नभस्स्थलम् ॥२३॥**

परमार्थतः आवृतत्वाभावेप्यात्मनः आवृतत्वप्रतीतिं दृष्टान्तेनोपपाद्य विक्षेपावभासोपि तस्य न परमार्थत इत्यत्र दृष्टान्तमाह—यथा लीलावशादिति ॥ २३ ॥

**तथैव मायया जीवो भ्रामितो वासनावशात् ।**
**नानाकारमिदं विश्वं भ्रममाणं च पश्यति ॥२४॥**

दार्ष्टान्तिकमाह—तथैवेति ॥ 'वासनावशात्' पूर्वपूर्वभ्रमजसंस्कारोद्बोधवशात् 'नानाकारं' देवतिर्यङ्मनुष्याद्यनेकाकारं 'भ्रममाणं' चञ्चलमित्यर्थः ॥ २४ ॥

**संसृज्य मनसा देवः संसरन्निव लक्ष्यते ।**
**यथार्को जलसंसर्गाच्चलन्नानेव लक्ष्यते ॥ २५ ॥**

---

(१) भ्रमन्तं पश्येपाठान्तरम् ।

मायया भ्राम्यमाणस्यापि जीवस्य न परमार्थतो भ्रमणमस्तीत्येतद्दृष्टान्तेनोपपादयति—संसृज्य मनसेति ॥ 'देवः' आत्मा। आत्मनो नानात्वप्रतिभासोप्यनेन दृष्टान्तेन मिथ्येत्युपपादित इति दर्शयति—नानेव लक्ष्यत इति ॥ चलन्निव नानेवेति योजना ॥ २५ ॥

**योगाभ्यासवशाद्येन मनो निर्विषयं कृतम् ।**
**निवृत्तः स पुमान्सद्यो जीवन्मुक्तो भविष्यति २६**

तदेवं मायाद्वारकं जीवस्य चिदात्मनो बन्धमुपवर्ण्य ससाधनं तत्त्वज्ञानद्वारकं मोक्षमाह—योगाभ्यासेति ॥ 'निर्विषयं कृतम्' आलम्बनशून्यमविषयब्रह्माकारं कृतमित्यर्थः। अत एव स पुमान् उपस्थिताद्बाह्यविषयान्निवृत्तः सन् जीवन्मुक्तः 'सद्यो' निर्विषयात्मज्ञानोदयसमय एव भविष्यतीत्यर्थः॥२६॥

**द्वा सुपर्णौ च सयुजावभवन्मायया शिवः ।**
**अजामेकां जुषन्नेको नानेवासीदिति श्रुतिः॥२७॥**

अत्र जीवेश्वरयोः मायिकभेदानुवादिन्यौ ऋचावुदाहरति—द्वा सुपर्णाविति ॥

"[१]द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते ।
तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति॥"
"अजामेकां लोहितशुक्लकृष्णां बह्वीं प्रजां जनयन्तीं सरूपाम्[२]" इत्यादि ॥ २७ ॥

---

(१) मुण्ड. ३-१. (२) याज्ञि. १२-५.

इति श्रीदक्षिणामूर्तिस्तोत्रार्थप्रतिपादके ।
प्रबन्धे मानसोल्लास अष्टमोल्लाससंग्रहः ॥ २८ ॥

अष्टमश्लोकव्यख्यामुपसंहरति—इतीति ॥ २८ ॥

इति श्रीमानसोल्लासवृत्तान्ते अष्टमोल्लासः ॥ ८ ॥

---

अथ नवमोल्लासः-

कथमेवंविधा माया निवर्तेतेति पृच्छतः ।
ईश्वरोपासनारूपस्तदुपायः प्रकीर्त्यते ॥ १ ॥

अधुना यथोक्तात्मेश्वरतत्त्वज्ञानसाधनविधानायोत्तरश्लोक इति सङ्गतिमाह—कथमेवंविधेति ॥ १ ॥

षट्त्रिंशत्तत्त्वरूपासु परमेश्वरमूर्तिषु ।
प्रत्यक्षेणोपलभ्यन्ते सर्वैरप्यष्टमूर्तयः ॥ २ ॥

किमालम्बना ईश्वरोपासना कार्या? न हि निरालम्बनोपासना सम्भवति; न च ईश्वरः स्वरूपत एव तदालम्बनं भवति, तस्य निराकारत्वेन तद्योगादित्याशङ्क्य प्रपञ्चोपधानकल्पितविग्रहस्येश्वरस्य युक्तमुपासनालम्बनत्वमिति परिहरति—षट्त्रिंशत्तत्त्वरूपास्विति ॥ षट्त्रिंशत्तत्त्वानि शैवागमे प्रसिद्धानि ॥ निर्धारणार्था सप्तमी । आकारस्यापि मनोगोचरत्वं, साक्षिमात्रगोचरत्वं वेति मतमाश्रित्य 'प्रत्यक्षेणोपलभ्यन्ते' इत्युक्तमिति द्रष्टव्यम् ॥ २ ॥

---

( १ ) ञ्चोपादानेति पाठान्तरम् ।

अनुमेयासु मनः क्षिप्रमारोढुं नार्हतीत्यतः।
मूर्त्यष्टकमयीं ब्रूते गुरुः सर्वात्मभावनाम् ॥ ३ ॥

कथमष्टावेवेमाः मूर्तयः उपादीयन्ते नान्याः? इत्यत आह—अनुमेयास्विति ॥ गुरुः श्रीशङ्कराचार्यः। प्रकाश्यप्रकाशकातिरिक्तस्य ज्ञेयस्याभावात् तस्य चाष्टमूर्त्यतिरिक्तत्वाभावात्। अत्र वक्ष्यमाणाष्टमूर्तिध्यानमेवेश्वरस्य सर्वात्मभावनेत्यभिप्रेत्योक्तं—सर्वात्मभावनामिति ॥ ३ ॥

"भूरम्भांस्यनलोनिलोम्बरमहर्नाथो हिमांशुः पुमा-
नित्याभाति चराचरात्मकमिदं यस्यैव मूर्त्यष्टकम्।
नान्यत्किञ्चन विद्यते विमृशतां यस्मात्परस्माद्विभो-
स्तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥९॥"

'अहर्नाथः' सूर्यः। 'पुमान्' त्रैलोक्यान्तर्यामी पुरुषः। यद्वा—'पुमान्' भोक्ता। अन्यत्प्रसिद्धम्। 'इति' एवं यदिदं चराचरात्मकमाभाति तत्सर्वं यस्यैव मूर्त्यष्टकं, तस्मै इति सम्बन्धः। कथमेतद्विश्वमीश्वरमूर्तिरूपम् ईश्वराद्भिन्नत्वादस्य? इत्याशङ्क्याह—नान्यदिति ॥ 'विमृशतां' विचारं कुर्वतां 'यस्मात् परस्मात्' सर्वकारणात् 'विभोः' अपरिच्छिन्नादीश्वरादन्यन्न विद्यते, विचार्यमाणे ईश्वरात्पृथक् स्वातन्त्र्येण जगतोऽभावात् सर्वमस्मिन् कल्पितम्, अस्यैव शरीरमित्यभिप्रायः। यत्तदोरन्वयः पूर्ववत् ॥ ९ ॥

---

(१) व्या० अनुमेयासु न मनः क्षिप्रमारोहतीत्यत इति पाठान्तरम्।

## अस्यैवं सिद्धान्तः-

**विराट्छरीरे ब्रह्माण्डे प्राणिनामपि विग्रहे ।**
**षट्त्रिंशत्तत्त्वसंघातः सर्वत्राप्यनुवर्तते ॥ ४ ॥**

अस्य तात्पर्यतो व्याख्यानप्रपञ्च(ना)मारभते—अस्यैवमिति ॥ अत्रेदं विवक्षितम्-अष्टमूर्त्यात्मकं सर्वं जगत्, तच्च महेश्वरविग्रहं षट्त्रिंशत्तत्वात्मकम्, तच्च द्विविधम्-अधिदैवमध्यात्मं चेति। तत्राद्यं ब्रह्माण्डं चतुर्दशभुवनात्मकं, द्वितीयं (देह)पिण्डात्मकम् ,एतयोः कार्यकारणरूपेणाभेदात्। समष्टिब्रह्मण्डावयवान् सर्वान् व्यष्टिपिण्डावयवेषु सम्पाद्य पिण्डावयविनं च ब्रह्मण्डावयव्यात्मना सम्पाद्य महेश्वरं तदात्मतयानुगतं ध्यायन् तस्मिन् स्थिरीभू(कृ)तान्तःकरणः तत्प्रसादात्तस्यैव निर्विशेषं तत्त्वं पूर्वश्लोकैरष्टभिः प्रतिपादितं साक्षात्कृत्य कृतकृत्यो भवतीति । तदेतत्सर्वं क्रमेण दर्शयति—विराडित्यादिना॥ 'ब्रह्माण्डे'समष्टिरूपे; 'प्राणिनां विग्रहे' व्यष्टिरूपे । षट्त्रिंशत्तत्त्वानि द्वितीयश्लोकोल्लासे विवृतानि-पञ्च भूतानि, पञ्च प्राणाः चतुर्दशेन्द्रियाणीति चतुर्विंशतिः; महान्, कालः, प्रधानं, माया, विद्या, पुरुष इति षट्; बिन्दुनादौ शक्तिशिवौ शान्तातीताविति षट्; एवं षट्त्रिंशत्तत्त्वानि यानि शैवागमे प्रसिद्धानि, तानि सर्वत्र पिण्डे ब्रह्माण्डेप्यनुवर्तन्त इत्यर्थः । न हि पिण्डं ब्रह्माण्डातिरिक्तं किञ्चिदस्ति, तदप्यष्टमूर्तिव्यतिरिक्तं नास्तीति भावः ॥ ४ ॥

---

(१) ५६. मे पृष्ठे.

व्याप्तिर्व्यष्टिशरीरेस्मिन् मनसो व्यष्टिरूपिणः ।
तस्मात्सर्वात्मकमिदं स्वशरीरं विचिन्तयेत् ॥५॥

तत्र पिण्डे ब्रह्माण्डसम्पादनप्रकारं वक्तुं तावन्निमित्तमाह —व्याप्तिरिति ॥ व्यष्टिरूपिणो मनसोस्मिन् व्यष्टिशरीरे व्याप्तिर्यस्मात्तस्मादिति योजना । 'त एते सर्व एव समाः सर्वेनन्ताः[1] इति वा मनःप्राणाननुक्रम्य हिरण्यगर्भरूपेणाम्नानान्मनसो व्यापकत्वम् । तस्य मनःप्रधानलिङ्गात्मनः समष्टिशरीरस्य तत्कार्यव्यष्टिशरीरे व्याप्त्युपपत्तेश्च तद्वारा व्यष्टिपिण्डस्यापि युक्तं सर्वात्मकत्वमिति भावः ॥ ५ ॥

व्यष्ट्युपासनया पुंसः समष्टिव्याप्तिमाप्नुयात् ।
उपसंक्रामतीत्येवं दशकृत्व उपादिशत् ॥ ६ ॥

यस्माच्चैवं पिण्डब्रह्माण्डयोरेकहिरण्यगर्भ[2]रूपत्वादत्यन्तमभेदः, तस्मात्पिण्डात्मना महेश्वरोपासनया समष्टिब्रह्माण्डात्मतां[3] लभत इति पिण्डे ब्रह्माण्डसम्पत्तिः कर्तव्येत्याह—व्यष्टीति ॥ पुंसो व्यष्ट्युपासनयेत्यन्वयः । पुंसः परमेश्वरस्य व्यष्टिशरीरा(न्तरा)त्मनोपासनयेत्यर्थः ॥ आप्नुयात् ॥ उपासक इति शेषः । तत्र प्रमाणमाह—उपसंक्रामतीत्येवमिति ॥ तैत्तिरीयोपनिषत्सु प्रथममध्यात्मपञ्चकोशान् अन्नमयादीननुक्रम्यान्ते 'एतमन्नमयमात्मानमुपसङ्क्रामति । एतं प्राणमयमात्मनमुपसङ्क्रामति । एतं मनोमयमात्मानमुपसङ्क्रामति । एतं विज्ञानमयमात्मानमुपसङ्क्रामति । एतमानन्दमयमात्मानमुपसङ्क्रामति'[4] इति पञ्चकृत्वः सङ्क्रमणसानन्दमय-

(१) बृ. उ. ३-५-१३ । (२) गर्भान्वयादेति पाठान्तरम् । (३) त्मतालभ्यते इति पाठान्तरम् । (४) तै. उ. २-८-५ ।

कोशान्तर्गतसर्वाधारव्यापकब्रह्मप्राप्तिरूपमुक्तम् । तथा भृगुवल्ल्यां चाधिदैवं पञ्चकोशाननुक्रम्यान्ते 'एतमन्नमयमात्मानमुपसङ्क्रम्य' इत्यादिना पञ्चकृत्वः तस्यैव सङ्क्रमणमाम्नातमिति परिच्छिन्नदृष्टेरपि पूर्णात्मविषयतया परिपूर्णप्राप्तिहेतुता प्रमासिद्धेत्यर्थः ॥ ६ ॥

**ब्रह्माण्डस्योदरे लोकाः सप्तभूरादयः स्मृताः ।**
**मूलादिब्रह्मरन्ध्रान्तेष्वाधारेषु वसन्ति ते ॥ ७ ॥**

इदानीं सम्पत्तिमनुक्रमते—ब्रह्माण्डस्येति ॥ भूरादयःसप्तलोकाः ये ब्रह्माण्डस्योदरे स्थिताः वर्तन्ते, ते मूलाधारादिब्रह्मरन्ध्रान्तेषु स्वाधारेषु वसन्ति, मूलाधारस्वाधिष्ठानमणिपूरकानाहतविशुद्धाज्ञासहस्रारेषु क्रमेण भूर्भुवस्वर्महर्जनस्तपस्सत्यमित्येते लोका वसन्तीति ध्यायेदित्यर्थः ॥ ७ ॥

**वीणादण्डो महामेरुरस्थीनि कुलपर्वताः ।**
**गङ्गा तु पिङ्गला नाडी यमुनेडा प्रकीर्तिता ॥८॥**
**सरस्वती सुषुम्नोक्ता नाड्योन्याः पुण्यनिम्नगाः ।**
**द्वीपाः स्युर्धातवः सप्त स्वेदबाष्पादयोऽब्धयः ॥९॥**

सम्पूर्णे पिण्डे लोकसंस्थानसम्पत्तिमुक्त्वा तत्रैव भूलोकसंस्थानविशेषसंपादनप्रकारमाह—वीणादण्ड इति ॥ अन्तस्सुषिरः पृष्ठवंशो वीणादण्डः, स महामेरुः मध्यत्वोन्नतत्वसामान्यात् । तत्पार्श्वास्थीनि कुलपर्वताः पारियात्रादयः, परितो विक्षिप्ततया स्थितत्वात् । गङ्गानदीं पिङ्गलानाड्यां सम्पादयेत्, इडायां यमुनां, सुषुम्नायां सरस्वतीं; पार्श्वयोर्मध्ये च प्रकटगुप्तत्वसामान्यात् नाडीत्रयं नदीत्रयात्मना ध्येयमित्यर्थः । अन्यासु नाडीषु सर्वा अन्या नदीः सम्पा-

दयेदित्याह—नाड्योन्या इति । त्वगादयः सप्त धातवो जम्ब्वादिद्वीपाः ध्येया इत्यर्थः । स्वेदबाष्पादयः शरीरगाः द्वीपावेष्टितसप्तसमुद्रत्वेन ध्येया इत्यर्थः ॥ ९ ॥

**मूले तिष्ठति कालाग्निरस्थिमध्ये च वाडवः ।**
**वैद्युतोग्निः सुषुम्नायां पार्थिवो नाभिमण्डले ॥१०॥**
**हृदि तिष्ठति सूर्याग्निः कपाले चन्द्रमण्डलम् ।**
**नक्षत्राण्यपराण्याहुर्नेत्रादीनीन्द्रियाण्यपि ॥ ११ ॥**

'मूले' मूलाधारे 'कालाग्निः' प्रलयकालानलः 'अस्थिमध्ये' अस्थिकूटान्तराळे स्वेदाद्यब्धिशोषको बाडबाग्निः तिष्ठतीत्यर्थः । 'वैद्युतोग्निः' दिव्योग्निः सुषुम्नायां तिष्ठति, क्षणस्फुरणत्वात्, सर्वनाडीषूष्मधाराप्रवर्तकत्वाद्वेत्यर्थः । 'पार्थिवः' पृथिवीधातुशोषणोग्निः, स नाभिमण्डले ध्येय इत्यर्थः ॥१०॥ हृदीति प्रसिद्धार्थम् । 'कपाले' ललाटे । 'अपराणि नक्षत्राणि' चन्द्रव्यतिरिक्तानि अश्विन्यादीनि सप्तविंशतिसङ्ख्यानि, तथा मङ्गलबुधादिग्रहाश्च नक्षत्ररूपेण दृश्यमानाः, ते सर्वे नेत्रादीन्द्रियेषु ध्येया इत्यर्थः ॥ ११ ॥

ब्रह्माण्डगतो वायुः शरीरे प्राणात्मनास्ति—

**[2]धार्यन्ते वायुभिर्लोका[3] यथा प्रवहणादिभिः ।**
**प्राणादिभिर्दशविधैर्धार्यते वायुभिर्वपुः ॥ १२ ॥**

स्वप्रचारेण ब्रह्माण्डधारकं वायुमन्तःशरीरे देहधारकप्राणात्मना ध्यायेदित्याह—धार्यन्त[4] इति ॥ प्रवहणसंवहनादिभिः [5]सप्तभिः भेदैरित्यर्थः ॥ १२ ॥

(१) भिमध्ये ध्ये इति पाठान्तरम् । (२) धार्यते वेति पाठान्तरम् । (३) लोंके येति पाठान्तरम् । (४) धार्यंत इति पाठान्तरम् । (५) भिः ससप्तेति पाठान्तरम् ।

प्राणो दशधा—

**प्राप्येडापिङ्गले प्राणो मूलात्सूर्यस्वरूपतः ।**
**नासिकाभ्यां बहिर्गत्वा लीयते द्विषडङ्गुले ॥१३॥**

प्राणस्य दशविधत्वं तत्कार्यनिर्देशनद्वारा दर्शयति—प्राप्येति ॥ 'मूलात्'मूलाधारात् उत्थिते इडापिङ्गले नाड्यौ प्राप्य 'सूर्यस्वरूपतः' सूर्यवदूष्माश्रयः सन् नासिकाभ्यां द्वाराभ्यां बहिर्देहात् गत्वा 'द्विषडङ्गुले' द्वादशाङ्गुलमात्रदेशे 'लीयते' लयमदर्शनं गच्छतीत्यर्थः ॥ १३ ॥

**अष्टाङ्गुलेन सोमात्मा नाडीभ्यामन्तरा[1]विशेत् ।**
**मलमूत्रमरुच्छुक्राण्यपानो विसृजेद्बहिः ॥ १४ ॥**

सोमात्मा सन् स एव प्राणोपानं प्रणुदन् अष्टाङ्गुलेन देशेनागत्य 'नाडीभ्याम्'इडापिङ्गलारूपा[2]भ्यां नासिकाच्छिद्राभ्यामन्तश्शरीरमध्ये आविशे[3]त् । तत्रापानो वायुर्मलादि बहिर्विसृजेत् गुदद्वारेत्यर्थः ॥ १४ ॥

**अग्नीषोममयो भूत्वा सुषुम्नारन्ध्रमाश्रितः ।**
**आब्रह्मरन्ध्रमुद्गच्छन्नुदानो वर्धते स्वयम् ॥ १५ ॥**

तस्यैवोदानापत्तिमाह—अग्नीषोममय इति ॥ 'वर्धते' विजृम्भते ॥ १५ ॥

**व्यापयेद्वपुषि व्यानो भुक्तान्नरसमन्वहम् ।**
**सन्धुक्षणं समानस्तु कायाग्नेः कुरुते सदा ॥१६॥**

भुक्तान्नरसम् 'अन्वहं' प्रत्यह्[illegible]य उपरि देहनाडीषु 'व्याप-

---

(१) विशदिति विशन्निति च पाठान्तरे । (२) भ्यां प्रेरयन्नासीति पाठान्तरम् । (३) विशदिति विशन्निति च पाठान्तरे ।

येत्' विविधमासमन्तात् प्रापयेत्, प्रचारयन् सर्वनाडीर्व्याप्नोतीत्येतत्, स व्यान इत्यर्थः। 'सन्धुक्षणं' प्रज्वलनानुकूलो व्यापारः। कायाग्नेः सदा सन्धुक्षणं कुर्वन् समान इत्यर्थः ॥१६॥

नागो हिक्काकरः कूर्मो निमेषोन्मेषकारकः।
क्षुतं करोति कृकरो देवदत्तो विजृम्भणम् ॥ १७ ॥
स्थौल्यं धनञ्जयः कुर्यान्मृतं चापि न मुञ्चति।

श्रुतिप्रसिद्धान् प्राणादिपञ्चवायून् विभज्य योगशास्त्रप्रसिद्धान्नागादीनपरान् पञ्च वायून्विभजते—नागो हिक्काकर इत्यादिना ॥ निमेषोन्मेषणे नेत्रयोः कुर्वन् कूर्म इत्यर्थः। 'विजृम्भणं' तन्द्रीवशात्[1] आस्यविदारणम् ॥ १७॥ 'स्थौल्यं' देहोपचयं 'मृतं च' शवरूपमपि न मुञ्चति, तत्राप्युच्छूनत्वकारणवायुर्धनञ्जय[2] इत्यर्थः ॥

आकाशो बहिरप्यन्तरवकाशं प्रयच्छति ॥ १८ ॥

एतावता 'भूरम्भांस्यनलोनिलः' इत्यन्तं व्याख्यातम्। इदानीमम्बरादीन्व्याचक्षाणः तत्सम्पादनं सूचयति—आकाश इति ॥ १८ ॥

चन्द्रार्कौ कालनेतारौ प्राणापानौ शरीरिणाम्।
साक्षी पुरुष इत्येवं मूर्त्यष्टकमिदं वपुः ॥ १९ ॥

यौ कालनेतारौ प्रसिद्धौ चन्द्रार्कौ, तौ—शरीरिणां शरीरे प्राणापानौ ध्येयावित्यर्थः। यः साक्षी संघातस्य, स पुरुषः पुमानित्युक्त इत्यर्थः। 'इत्याभाति[3] चराचरात्मकम्' इत्येतद्व्याचष्टे—इत्येवमिति ॥ १९ ॥

---

(१) तन्द्रावेति पाठान्तरम्। (२) कारको धनेति पाठान्तरम्।
(३) इत्याभातीत्यत्रेतिपदरहितं पाठान्तरम्।

समनस्कमिदं योगी सेवमान उपासनम् ।
अष्टाङ्गयोगयुक्तः सन्नमनस्कं स गच्छति ॥ २० ॥

एवमष्टमूर्तिस्वरूपं देहे[1] एव सम्पाद्य ध्यायतः फलमाह—समनस्कमिति ॥ मनसा व्याप्तत्वात् समनस्कमिदमष्टमूर्तिलक्षणम् 'उपासनं' ध्यानं 'सेवमानः' अभ्यस्यन् 'योगी' योगनिरतः । कथं योगी ? अष्टाङ्गयोगयुक्तः सन् । सोमनस्कमलिङ्गमीश्वरं 'गच्छति', तत्पदमाप्नोतीत्यर्थः ॥ २० ॥

योगाष्टाङ्गेषु मनस्साध्या यमाः—

मनःप्रसादः सन्तोषो मौनमिन्द्रियनिग्रहः ।
दया दाक्षिण्यमास्तिक्यमार्जवं मार्दवं क्षमा ॥२१॥
भावशुद्धिरहिंसा च ब्रह्मचर्यं स्मृतिर्धृतिः ।
इत्येवमादयोन्ये च मनस्साध्या यमाः स्मृताः॥२२॥

इदानीं योगाष्टाङ्गानि विभजते—मनःप्रसाद इत्यादिना ॥ मनस उद्रिक्तसत्त्वावस्थापत्तिः 'प्रसादः' प्रसन्नता । लक्ष्ये विक्षेपाभावेनावस्थितिरिति यावत् । 'सन्तोषः' यदृच्छालाभसन्तुष्टिः । 'मौनं' वृथावागुत्सर्जनत्यागः। 'इन्द्रियनिग्रहः' तद्वशीकरणम् । 'दया' भूतद्रोहाकरणम् । 'दाक्षिण्यं' व्यवहारे दक्षता, आग्रहराहित्यमित्येतत् । 'आस्तिक्यं' शास्त्राद्युक्तविषये विश्वासः । 'आर्जवम्' ऋजुत्वमकुटिलत्वम् । 'मार्दवं' मृदुत्वमकठिनत्वम् । 'क्षमा' क्रोधहेतुष्वपि क्रोधपरित्यागः।२१। 'भावशुद्धिः' वचनोच्चारणादौ मनःशुद्धिः । शुद्धान्तःकरणत्वमिति यावत्। 'अहिंसा' परपीडावर्जनम्। 'ब्रह्मचर्यम्' अष्टाङ्गमै-

(१) देह एवेत्येतद्रहितं पाठान्तरम् ।

थुनत्यागः । स्मृतिर्जन्ममृत्युजराव्याधिदुःखदोषानुसन्धानम्। 'धृतिः' धैर्यं मनःप्राणेन्द्रियाणामवसादप्राप्तौ उत्तम्भनम् इत्येवमादयः "अमानित्वमदम्भित्वम्"[1] इत्यादयः 'अन्ये च' अद्वेष्टृत्वादयश्च[2] ये मनसः[3] साध्याः योगसाधनभूताः धर्माः, ते इमे यमाः 'स्मृताः' उक्ता विद्वद्भिरित्यर्थः । मनोमात्रसाध्याः निवृत्तिलक्षणयोगाङ्गविशेषाः यमा इति यमलक्षणमनेनोक्तमिति द्रष्टव्यम् ॥ २२ ॥

कायसाध्या नियमाः–

स्नानं शौचं क्रतुः सत्यं जपो होमश्च तर्पणम् ।
तपो दानं[4] तितिक्षा च नमस्कारः प्रदक्षिणम् ॥२३॥
व्रतोपवासाद्याश्चान्ये कायिका नियमाः स्मृताः ।

नियमान् कायसाध्यलक्षणान् योगविशेषानाह—स्नानमिति ॥ 'स्नानशौचे' बाह्ये एव ग्राह्ये, भावशुद्धेर्यमेषूक्तत्वात् । 'क्रतुः' ईश्वरपूजनं 'सत्यं' यथार्थवचनं, 'तितिक्षा' द्वन्द्वसहनं, ॥२३॥व्रतोपवासाद्यास्तत्तत्कालोचिताः, 'अन्येपि'[5] ये योगाविरोधिनः आहारविहारादयः 'कायिकाः' कायसाध्याः । उपलक्षणमेतत्, कायवाक्साध्या इत्यर्थः ॥

आसनानि–

स्वस्तिकं गोमुखं पद्मं हंसाख्यं ब्राह्ममासनम्॥२४॥
नृसिंहं गरुडं कूर्मं नागाख्यं वैष्णवासनम् ।

---

(१) भगवद्गी. १३ ७–११। (२) भगवद्गी. १२.१३–१९।
(३) श्च मनस्साध्या इति पाठान्तरम् । (४) दान्तिस्तितीति पाठान्तरम् ।
(५). पि यथा यो इति पाठान्तरम् ।

वीरं मयूरं वज्राख्यं सिद्धाख्यं रौद्रमासनम् ॥ २५॥
योन्यासनं विदुः शाक्तं शैवं पश्चिमतानकम् ।

आसनान्याह—स्वस्तिकमित्यादिना ॥ स्वस्तिकाद्यासनचतुष्टयं 'ब्राह्मं' ब्रह्मदेवत्यमित्यर्थः ॥२४॥ नृसिंहादिचतुष्टयं 'वैष्णवं' विष्णुदेवत्यम् । वीरादिचतुष्टयं 'रौद्रं' रुद्रदेवत्यम् ॥ २५ ॥ योन्यासनं 'शाक्तं' शक्तिदेवत्यं विदुरित्यर्थः । पश्चिमतानकं नाम आसनं शैवं विदुर्योगिन इति योजना ॥

निरालम्बनयोगस्य निरालम्बनमासनम् ॥ २६ ॥
निरालम्बतया ध्यानं निरालम्बः सदाशिवः ।

योगविशेषे चासनविशेषमाह—निरालम्बनेति ॥ 'निरालम्बनं' करचरणादिसंस्थानविशेषनियमालम्बनरहितम् ॥२६॥ कोसौ निरालम्बयोग इत्यपेक्षायामाह—निरालम्बतया ध्यानमिति ॥ को निरालम्ब इत्यत आह—निरालम्बः सदाशिव इति ॥ 'सदाशिवः' निर्विशेषः परमात्मा, तदालम्बनं तस्मिन्मनस्समाधानं निरालम्बनयोग इत्यर्थः ॥ स्वस्तिकाद्यासनानां लक्षणानि योगग्रन्थेभ्योवगन्तव्यानि ॥

प्राणायामाः-

रेचकः पूरकश्चैव कुम्भकः प्राणसंयमः ॥ २७ ॥

इदानीं प्राणायामानाह—रेचक इति ॥ रेचकपूरककुम्भकरूपस्त्रिविधः प्राणनिरोधः प्राणायाम इति तात्पर्यार्थः ॥२७॥

प्रत्याहारः-

इन्द्रियाणां समस्तानां विषयेभ्यो निवारणम् ।
प्रत्याहार इति प्रोक्तं प्रत्याहारार्थवेदिभिः ॥ २८ ॥

(१). वज्रं चेति पाठान्तरम् । (२). प्रोक्त इति पाठान्तरम् ।

प्रत्याहारानाह—इन्द्रियाणामिति ॥ स्पष्टार्थः ॥ २८ ॥

धारणा-

आधारे क्वापि मनसः स्थापनं धारणोच्यते ।

धारणाख्यं योगाङ्गमाह—आधार इति ॥ क्वापि मणिपूरकादिषु चक्रेष्वित्यर्थः । अथ वा— क्वापि शुभविषये हृदि[1]-आविष्कृतविष्णवादिमूर्तावित्यर्थः ॥

ध्यानम्-

ब्रह्मविष्णुशिवादीनां चिन्ता ध्यानं प्रचक्षते ॥२९॥

ध्यानमाह—ब्रह्मविष्णुशिवादीनामिति ॥ धारणा-प्राणेन सह मनसः क्वापि स्थिरी[2]करणमात्रं, ध्यानं तु-विषयविशेषे विष्णवादौ मनोवृत्तिधाराप्रवाह इति भेदः ॥ २९ ॥

समाधिः-

ध्यानादस्पन्दनं बुद्धेः समाधिरभिधीयते ।
अमनस्कसमाधिस्तु सर्वचिन्ताविवर्जितम् ॥३०॥

अष्टममङ्गं समाधिमाह—ध्यानादिति । अयं सविकल्पकः समाधिः समनस्को ज्ञातृज्ञेयविभागोल्लेखलेशसहितोङ्गमित्यर्थः । एतैरङ्गैः साध्यं निर्विकल्पकसमाधिरूपम् अ[3]ङ्गिनं योगमाह—अमनस्कसमाधिस्त्विति । सर्वचिन्ता-ज्ञातृज्ञेयविभागोल्लेखः, तद्विवर्जितं लयविक्षेपरहिततया प्रशा[4]न्तावस्थमित्यर्थः ॥ ३० ॥

---

(१). हृदावीति पाठान्तरम् । (२). स्थितिकेति पाठान्तरम् ।

(३). ङ्गिनमाहेति पाठान्तरम् । (४). शान्तां वस्यत इत्येति वरयत इत्येति च पाठान्तरे ।

चित्ते निश्चलतां याते प्राणो भवति निश्चलः।
चित्तस्य निश्चलत्वाय योगं सध्यानमभ्यसेत्॥३१॥

चित्तनैश्चल्यफलमाह—चित्त इति ॥ प्राणनैश्चल्ये [चित्तनैश्चल्यं] हेतुरुक्तः। चित्तनैश्चल्ये त्वष्टाङ्गयोग एव हेतुः। अतस्तं यत्नेनाभ्यसेदित्याह—चित्तस्येति॥ सध्यानमिति ध्यानमात्रग्रहणं तत्रादरातिशयद्योतनार्थम् ॥ ३१ ॥

योगसाधनान्तराणि-

आकुञ्चनमपानस्य प्राणस्य च निरोधनम्।
लम्बिकोपरि जिह्वायाः स्थापनं योगसाधनम्॥३२॥

पुनरेकमन्यं योगसाधनमाह—आकुञ्चनमिति ॥ गुदद्वारस्य सङ्कोचनेन वायोरूर्ध्वस्रोतःप्रवर्तनम्-'आकुञ्चनं' कुम्भकेन प्राणस्य शरीरान्तर्निरोधनं; 'लम्बिका' तालुमूले स्तनाकारो मांसखण्डः, तदुपरि जिह्वायाः स्थापनं बलान्निरोध इत्येतत्, योगस्य चित्तवृत्तिनिरोधलक्षणस्य साधनमुत्कृष्टो हेतुरित्यर्थः ॥ ३२ ॥

स्थानविशेषाभिजययोगस्य लक्षणानि-

चित्ते निश्चलतां याते [१]प्राणे मध्यपथं गते।
चिह्नान्येतानि जायन्ते पञ्चभूतजयात्पृथक् ॥३३॥

इदानीमभ्यासवशीकृतचित्तप्राणस्य योगिनश्चिह्नान्याह—चित्ते निश्चलतां यात इति ॥ पञ्चभूतजयात्पृथगित्यस्यायमर्थः—पादादिजानुपर्यन्तं-पृथिवीस्थानं, जान्वादिनाभिपर्यन्तम् अपां स्थानं, तदादिकण्ठपर्यन्तं-तेजस्स्थानं, ततो

(१). प्राणमध्ये लयं गेति पाठान्तरम्।

भ्रूमध्यपर्यन्तं—वायुस्थानं, तत ऊर्ध्वं ब्रह्मरन्ध्रपर्यन्तम् आकाशस्थानम्, एतेषु धारणाभ्यासक्रमेण[1] एतज्जयादेतानि चिह्नानि भवन्तीति[2] ॥ ३३ ॥

**मलमूत्रकफाल्पत्वमारोग्यं लघुता तनोः ।**
**सुगन्धः स्वर्ण[स्वर]वर्णत्वं प्रथमं योगलक्षणम् ॥ ३४ ॥**

कानि तानीत्यपेक्षायामाह—मलमूत्रेति । 'प्रथमं योगलक्षणं' पृथिव्याख्यप्रथमभूमिकाजयपर्यन्तस्य योगस्य लक्षणमित्यर्थः । एवमुत्तरत्रापि योजना । अत्रास्ति श्वेताश्वतरीयाणां मन्त्रोपनिषत् 'युञ्जानः प्रथमं मनः[3]' इति योगं प्रकृत्य
"पृथ्व्याप्यतेजोनिलखे समुत्थिते पञ्चात्मके योगगुणे प्रवृत्ते ।
न तस्य रोगो न जरा न मृत्युः प्राप्तस्य योगाग्निमयं शरीरम् ॥
लघुत्वमारोग्यमलोलुपत्वं वर्णप्रसादं स्वरसौष्ठवं च ।
गन्धः शुभो मूत्रपुरीषमल्पं योगप्रवृत्तिं प्रथमां वदन्ति[4] ॥"
इति ॥ ३४ ॥

**कण्टकाग्रेष्वसङ्गत्वं जलपङ्केष्वमज्जनम्[5] ।**
**क्षुत्तृडादिसहिष्णुत्वं द्वितीयं योगलक्षणम् ॥ ३५ ॥**

द्वितीयभूमिकाधारणासिद्धिचिह्नान्याह—कण्टकाग्रेष्विति ॥ असङ्गत्वं कण्टकैरवेधनम् ॥ ३५ ॥

**बह्वन्नपानभोक्तृत्वमातपादिसहिष्णुता ।**
**दर्शनं श्रवणं दूरात्तृतीयं योगलक्षणम् ॥ ३६ ॥**

तृतीयामाह—बह्वन्नेति ॥ ३६ ॥

---

(१). ण तज्जेति पाठान्तरम् । (२) अत्रेतीति नास्ति पुस्तकान्तरे ।
(३) श्वे. उ. २-१२ । (४). श्वे. उ. २ १३ । (५) सङ्गश्च जले पङ्केप्यमेति जलसङ्गेप्यमेति च पाठान्तरे ।

मण्डूकप्लवनं भूमौ मर्कटप्लवनं द्रुमे ।
आकाशगमनं चेति चतुर्थं योगलक्षणम् ॥ ३७ ॥

चतुर्थलक्षणमाह—मण्डूकप्लवनमिति ॥ ३७ ॥

ज्ञानं त्रिकालविषयमैश्वर्यमणिमादिकम् ।
अनन्तशक्तिमत्त्वं च पञ्चमं योगलक्षणम् ॥ ३८ ॥

पञ्चमं योगलक्षणमाह—ज्ञानमिति ॥ 'अनन्तशक्तिमत्त्वम्' अपरिमितबलवत्त्वम् ॥ ३८ ॥

वशीकृतमनोयोगस्य चिह्नानि-

प्राणे सुषुम्नां संप्राप्ते नादोन्तः श्रूयतेष्टधा ।
घण्टादुन्दुभिशङ्खाब्धिवीणावेण्वादितालवत् ॥ ३९ ॥

एवं स्थानविशेषाभिजये चिह्नान्युक्तानि । सुषुम्नायां प्राणनिरोधनेन तत्र मनोवशीकारे चिह्नमाह—प्राणे सुषुम्नां सम्प्राप्त इति ॥ अष्टधात्वमेवाह—घण्टेति । वेण्वादीत्यादिपदात् मृदङ्गादि गृह्यते । एतेषां ध्वनिसदृशाः नादाः श्रुतिगोचराः भवन्तीत्यर्थः ॥ ३९ ॥

तत्फलमाह-

तनूनपात्तटित्तारातारेशतपनोपमम् ।
ब्रह्मनाडीं गते प्राणे बिम्बरूपं प्रकाशते ॥ ४० ॥

एवं सिद्धे सुषुम्नायां धारणायोगे प्रत्यग्रूपेश्वराविर्भावो भवतीत्याह—तनूनपादिति ॥ 'तनूनपाद्' अग्निः । 'तटित्' सौदामिनी । 'तारा' नक्षत्राणि । 'तारेशः' चन्द्रः ।' 'तपनः'

(१) मण्डकेति मूले टीकायां च पाठान्तरम् ।

सूर्यः । 'ब्रह्मनाडीं' सुषुम्नाम् । 'बिम्बरूपं' परमेश्वरचैतन्यं[1] क्रमेणाग्न्यादिभाववत् अवभासत इत्यर्थः ॥ ४० ॥

प्रणवाभिव्यक्तिप्रकारः-

श्वासाश्चरन्ति यावन्तो मनुष्यस्य दिनं प्रति ।
तावन्ति योजनान्यर्कः श्वासेश्वासे प्रधावति॥४१॥

इदानीं तत्र प्रणवाभिव्यक्तिप्रकारमाह—श्वासाश्चरन्तीति ॥ ४१ ॥

तत्र दिनेदिने प्राणिनां श्वासमन्त्रसङ्ख्या-

एकविंशतिसाहस्रं षट्छतं श्वाससङ्ख्यया ।
सोहमित्युच्चरत्यात्मा मन्त्रं प्रत्यहमायुषे ॥ ४२ ॥

मनुष्यस्य दिनं प्रति कति श्वासाश्चरन्तीत्यपेक्षायामाह—एकविंशतीति ॥ आ सूर्योदयात् सूर्योदयपर्यन्तम् अहोरात्रं यावत्, तावत् षट्छताधिकैकविंशतिसहस्रसङ्ख्यं[2] श्वासोच्छ्वासमाचरन् हंसः सोहमिति मन्त्रमुच्चरति स्वभावत एव । किमर्थम् ? आयुषे आयुर्वृद्ध्यर्थमित्यर्थः ॥ ४२ ॥

तत्र प्रणवः-

सकारं च हकारं च लोपयित्वा प्रयोजयेत् ।
सन्धिं वै पूर्वरूपाख्यं ततोसौ प्रणवो भवेत्॥४३॥

ततः किमित्यत आह—सकारं[3] चेति ॥ सकारे हकारे च लुप्ते ओकारः अकारः बिन्दुश्च अवशिष्यते । तत्र पूर्वरूपाख्यं 'सन्धिं प्रयोजयेत्' अकारमोकारात्मन्येकीकुर्यात्, बिन्दुं च उकारेण योजयेदित्यर्थः ॥ ४३ ॥

---

(१). रभोत्मेश्वेति पाठान्तरम् । (२). सङ्ख्याश्चेति पाठान्तरम् ।
(३) चेतीत्युत्तरे लकारस्यावयवा[illegible]यस्य अवयवान् विभजते-सन्धिं चेति ॥ सकेति पाठान्तरम् ।

प्रणवे पञ्चाक्षरी-

अकारश्चाप्युकारश्च मकारो बिन्दुनादकौ ।
पञ्चाक्षराण्यमून्याहुः प्रणवस्थानि पण्डिताः ॥४४॥

अस्य ॐकारस्य प्रणवाख्यस्यावयवान्विभजते तच्चिन्तनार्थम्—अकारश्चाप्युकारश्चेति॥ अश्च उश्च ओ, मकारे योजिते एतदुपरि–ओम्। अयं च मकारः स्वरहीनत्वात् परेण बिन्दुना योज्यः[1] । तदा ॐ इति रूपं निष्पद्यते । एतच्च घोषवता प्राणेन एकीकारेण नादेन मूलाधारादुत्थितेन प्राणोष्मसञ्चरणनाडीगतसुषिराभिव्यक्तेन अभिव्यज्यत इति नादावसान उच्यते। एवं[2] 'प्रणवस्थानि' प्रणवशब्दवाच्यपिण्डस्थानि अमूनि पञ्चाक्षराणि, अकार उकारो मकारो बिन्दुश्चेति चत्वारि, नादश्च तेषां सामान्यात्मकः पञ्चममक्षरम्, इत्येवं पञ्चाक्षराण्याहुः 'पण्डिताः' आत्मविद्यासु कुशला इत्यर्थः ॥ ४४ ॥

एतत्पञ्चाक्षराणां देवताः–

ब्रह्मा विष्णुश्च रुद्रश्चापीश्वरश्च सदाशिवः ।
तेष्वक्षरेषु तिष्ठन्ति षट्त्रिंशत्तत्त्वसंयुताः ॥ ४५ ॥

अथैतेषामक्षराणां (क्रमेण) देवता आह—ब्रह्मा विष्णुश्चेति॥ षट्त्रिंशत्तत्त्वसंयुता इति॥तान्यपि तत्त्वानि प्रणवान्तर्गतान्येव, न ततो बहिः सन्तीति द्योतयन् प्रणवस्य पूर्णात्मतां ध्वनयति । सर्वं हि वाच्यं वाचकैर्ग्रस्तमवभासते, सर्वं च वाचकं प्रणवाक्षरेण गृह्यते, तस्य सर्वशब्दसामान्यात्मकतया सर्वशब्दव्यापकत्वात् । तथा च श्रुतिः—'तद्यथा शङ्कुना सर्वा-

(१) ज्यः । तच्च ॐ इतीति पाठान्तरम् । (२) एवमिति नास्ति क्वचित्

णि पर्णानि सन्तृण्णान्येवमोङ्कारेण सर्वा वाक्सन्तृण्णोङ्कार एवेदं सर्वम्[1]' इति। 'ओमित्येतदक्षरमिदं सर्वम्[2]' 'सर्वं ह्येतद्[3]ब्रह्म' इत्योङ्कारब्रह्मणोरभेदप्रतिपादनात् पूर्णाद्वितीयब्रह्मात्मकः प्रणवः संवृत्त इति, स तथोपास्य इति तात्पर्यार्थः॥४५॥

गुरुदेवतोपासनाधीना सर्वसिद्धिः—

**गुरुप्रसादाल्लभते योगमष्टाङ्गलक्षणम् ।**
**शिवप्रसादाल्लभते योगसिद्धिं च शाश्वतीम्॥४६॥**

इदानीं—

'यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ ।
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः[3] ॥१॥'

इति श्रुतिमाश्रित्य गुरुदेवतोपासनाधीना सर्वसिद्धिरिति तत्कर्तव्यतां सूचयन्नाह—गुरुप्रसादादिति ॥ योगसिद्धिः आत्मतत्त्वाविर्भावः ॥ ४६ ॥

प्रणवार्थः-

**सच्चिदानन्दरूपाय बिन्दुनादान्तरात्मने ।**
**आदिमध्यान्तशून्याय गुरूणां गुरवे नमः ॥४७॥**

व्याख्यानान्ते मङ्गलमाचरन्नुक्तप्रणवार्थं प्रकटयति—सच्चिदानन्दरूपायेति ॥ स्वरूपमुक्तम् । बिन्दुनादान्तरात्मन इति ॥ ताभ्यामुपलक्षणीयतया उपलक्षणमुच्यते । एतदुक्तं भवति—सच्चिदानन्दाः अकारोकारमकारात्मकाः । प्रणवब्रह्म[5]स्वरूपनित्यकूटस्थं च, बिन्दुनादौ तु रूपनामनी आविर्भावतिरोभावधर्मकौ[6], उत्पत्तिस्थितिलयाधारं वस्तु गमयत

(१) छा. २-२३-४ । (२) [illegible]ाण्डू. १ । (३) श्वेता. ६-२३ । *
(५) ब्रह्मेति ना[illegible]त क्वचित् । (६) कौ स्वोत्पे इति पाठान्तरम् ।

इति प्रणवब्रह्मोपलक्षणमिति ॥ नामरूपात्मकनादबिन्द्वधिष्ठानस्य आश्रयान्तरशङ्कामपाकुर्वन्नाह—आदिमध्यान्तशून्यायेति। कोसावेवंविध इत्यत आह—गुरूणां गुरवे नम इति। दक्षिणामूर्तये नम इत्यर्थः ॥ ४७ ॥

**इति श्रीदक्षिणामूर्तिस्तोत्रार्थप्रतिपादके ।**
**प्रबन्धे मानसोल्लासे नवमोल्लाससङ्ग्रहः ॥ ४८ ॥**

नवमश्लोकव्याख्यामुपसंहरति—इतीति ॥ ४८ ॥

इति श्रीदक्षिणामूर्तिस्तोत्रव्याख्यानप्रबन्धमानसोल्लासवृत्तान्ते नवमोल्लासविलासः समाप्तः ॥ ९ ॥

---

अथ दशमोल्लासः—

एतस्तोत्रफलम्—

**परिच्छिन्नमहम्भावं परित्यज्यानुषङ्गिकम् ।**
**पूर्णाहम्भावलाभोस्य स्तोत्रस्य फलमुच्यते ॥ १ ॥**

उत्तरश्लोकतात्पर्यं संक्षिप्य कथयन् तस्य पूर्वेण सङ्गतिमाह—परिच्छिन्नमिति ॥ आनुषङ्गिकं देहाद्यभिमानानुषङ्गादागतमित्यर्थः ॥ उच्यते ॥ उत्तरश्लोकेनेति शेषः ॥ १ ॥

**"सर्वात्मत्वमिति स्फुटीकृतमिदं यस्मादमुष्मिंस्तवे**
**तेनास्य श्रवणात्तथार्थमननाद्ध्यानाच्च सङ्कीर्तनात् ।**
**सर्वात्मत्वमहाविभूतिसहितं स्यादीश्वरत्वं स्वतः**
**सिध्येत्तत्पुनरष्टधा परिणतं चैश्वर्यमव्याहतम् ॥ १० ॥**

---

(१) त्यपेक्षाया माहेति पाठान्तरम् । (२) त्वा[illegible]विलासो नवमस्य इति पाठान्तरम् ।

इति श्रीमच्छङ्करभगवत्पादाचार्यविरचितं
दक्षिणामूर्तिस्तोत्रं समाप्तम् ॥

यस्माद् 'अमुष्मिंस्तवे' दक्षिणामूर्तिस्तोत्रे 'इति' उक्तप्रकारेण सर्वात्मत्वम् 'इदं' प्रत्यक्षं स्फुटीकृतम्, तस्मादस्य स्तोत्रस्य श्रवणात् गुरोरर्थतोवगमात्; 'तथार्थमननात्' यथा श्रुतं तथा अर्थस्य युक्त्याव्यवस्थापनात्; 'ध्यानात्' श्रु(तम)तार्थाकाराऽऽवृत्तिनैरन्तर्यकरणाच्च 'सङ्कीर्तनात्' केवलं स्तोत्रकीर्तनमात्रादपीत्यर्थः; सर्वात्मत्वलक्षणा या महाविभूतिः तया सहितमीश्वरत्वं निरुपचरितं निरतिशयं चेश्वरत्वं स्यात्, 'स्वतः' स्वभावतः सिद्धं, न प्रयत्नसाध्यं, तस्यानित्यत्वावश्यम्भावादित्यर्थः। यत्पुनः प्रसिद्धमष्टधा परिणतमणिमाद्यैश्वर्यं, तच्च सिद्ध्येदनुषङ्गादेव। तच्च 'अव्याहतम्' अप्रतिहतम्। अत इदं स्तोत्रमर्थतः पाठतो यत्नेन गुरुभ्योवगम्य तन्निष्ठो भवेत्, मुमुक्षुरभ्युदयार्थी वेत्यर्थः ॥ १० ॥

अस्य मोक्षो मुख्यं फलम्—

इदमत्राकूतम्—

पुत्रपौत्रगृहक्षेत्रधनधान्यसमृद्धयः।
अर्वाचीनाश्च सिद्ध्यन्ति स्वर्गपातालभूमिषु ॥ २ ॥

अस्य व्याख्यां प्रारभते—इदमत्राकूतमिति ॥

यद्यप्यस्मात् स्तोत्रात् सर्व एवाभिलषणीयार्थाः लभ्यन्ते। तथापि बुद्धिमता न क्षुद्रलाभायेदं प्रयोक्तव्यं, किन्तु महाफलाय पारमेश्वरपदायैव। अर्वाचीन[illegible]निकफलानि तु प्रसङ्गतो वस्तुम-

(१) रूपमितमि[illegible] पाठान्तरम्। (२) लषिता अपि बु इति पाठान्तरम्।

हिन्नैव भविष्यन्तीति तात्पर्यमभिप्रेत्याह—पुत्रपौत्रेत्यादिना॥ स्वर्गे वा पाताले वा भूमौ वा भविष्यन्त्येव यथाकालं सर्वैर्वाचीनाः फलभेदा इत्यर्थः ॥ २ ॥

**पाके प्रवर्तमानस्य शीतादिपरिहारवत् ।**
**प्रासङ्गिकाश्च सिद्ध्यन्ति स्तोत्रेणानेन सर्वदा ॥३॥**

तत्रासङ्कल्पितस्यापि फलस्य अनुषङ्गिणः सिद्धिं दृष्टान्तेनोपपादयति—पाके प्रवर्तमानस्येति ॥ ३ ॥

ईश्वरत्वं नाम-

**ऐश्वर्यमीश्वरत्वं हि तस्य नास्ति पृथक्स्थितिः ।**
**पुरुषे धावमाने हि छाया तमनुधावति ॥ ४ ॥**

एवं तात्पर्यमुक्त्वा स्यादीश्वरत्वमित्युक्तमीश्वरत्वं व्याचष्टे—ऐश्वर्यमीश्वरत्वं हीति ॥ ईश्वरस्य स्वरूपमैश्वर्यं; तस्येश्वरात् पृथक्स्थितिः पार्थक्येनावस्थानं नास्तीत्यर्थः । तत्र दृष्टान्तमाह—पुरुषे धावमान इति ॥ ४ ॥

स्वस्येश्वरत्वप्राप्तावेव यतितव्यम्-

**अनन्तशक्तिरैश्वर्यं निष्यन्दाश्चाणिमादयः ।**
**स्वस्येश्वरत्वे संसिद्धे सिद्ध्यन्ति स्वयमेव हि ॥५॥**

किं तदैश्वर्यमिति प्रसिद्धिः, यच्छायावदवियुक्तमीश्वरस्य सदेत्यपेक्षायामाह—अनन्तशक्तिरिति ॥ वाचामगोचरमनतिशयं सहजं सामर्थ्यं तदैश्वर्यमित्यर्थः॥ नन्वणिमादिसिद्ध्यो ह्यैश्वर्यमिति प्रसिद्धिः, कथमनन्तशक्तिरैश्वर्यमिति? तत्राह—निष्यन्दाश्चेति । अणिमादयः सिद्धयः ईश्वरशक्तेर्निष्यन्दाः विप्रुण्मात्राः, तासां परिच्छिन्नत्वात्, अन्येष्वपि तारतम्येन भावात् । तथा च श्रुतिः 'एतस्यैवानन्दस्यान्यानि भूतानि

मात्रामुपजीवन्ति' इति । तस्मादीश्वरत्वसिद्ध्यर्थमेव स्तोत्रं प्रयोक्तव्यं, नाणिमादिसिद्ध्यर्थं, तस्य तस्मिन्नानुषङ्गिकत्वादित्यभिप्रेत्याह—स्वस्येति ॥ ५ ॥

**यदीयैश्वर्यविप्रुड्भिर्ब्रह्मविष्णुशिवादयः ।**
**ऐश्वर्यवन्तो भासन्ते स एवात्मा सदाशिवः ॥ ६ ॥**

तथापि ब्रह्माद्यैश्वर्याय पृथक्प्रयोक्तव्यमित्याशङ्क्य तदप्यस्यैव लेश इत्याह—यदीयेति ॥ 'विप्रुड्भिः' बिन्दुभिः, लेशैरिति यावत् । कथं विद्वदैश्वर्यलेशाः ब्रह्माद्यैश्वर्यभेदाः? । तेषां सदाशिवविभूतित्वादित्याशङ्क्याह—स एवात्मा सदाशिव इति ॥ सदाशिव एव आत्मा, आत्मैव सदाशिव इत्यर्थः ॥ ६ ॥

**पुष्पमानयता गन्धो विनेच्छामनुभूयते ।**
**पूर्णाहम्भावयुक्तेन परिच्छिन्ना विभूतयः ॥ ७ ॥**

अतो ब्रह्माद्यैश्वर्यमपि स्वभावमहिम्नैव उपनमते विदुष इत्येतद्दृष्टान्तेनाह—पुष्पमानयतेति ॥ तस्मात्पूर्णात्मनि सदाशिवरूप एव सम्भावना कार्या, न ब्रह्मादिष्विति स्थितं स्तोत्रफलस्तुतेस्तात्पर्यम् ॥ ७ ॥

तत्रानुषङ्गिकाष्टसिद्धिनामानि—

**अणिमा महिमा चैव गरिमा लघिमा तथा ।**
**प्राप्तिः प्राकाम्यमीशित्वं वशित्वं चाष्ट सिद्धयः ८**

इदानीमणिमाद्यैश्वर्याणि विभज्य व्युत्पादयन् 'अष्टधा परिणतं चैश्वर्यमव्याहतम्' इत्येतद्व्याचष्टे—अणिमा महिमा चेति ॥ ८ ॥

(१) बृह. ६.३.२२.

(१) अणिमासिद्धिलक्षणम्–

अत्यन्तमणुषु प्राणिष्वात्मत्वेन प्रवेशनम् ।
अणिमासंज्ञमैश्वर्यं व्याप्तस्य परमात्मनः ॥ ९ ॥

तत्राणिमाख्यां सिद्धिं दर्शयति—अत्यन्तमिति ॥ पुत्तिकापुलकादिप्राणिष्वित्यर्थः ॥ ९ ॥

(२) महिमासिद्धिलक्षणम्–

ब्रह्माण्डादिशिवान्तायाः षट्त्रिंशत्तत्त्वसंहतेः ।
बहिश्च व्याप्य वृत्तित्वमैश्वर्यं महिमाह्वयम् ॥ १० ॥

महिमाख्यामाह—ब्रह्माण्डादीति॥ शिवो विराज्यभिव्यक्तः पुरुषः ॥ १० ॥

(३) लघिमासिद्धिलक्षणम्–

महामेरुसमाङ्गस्य समुद्धरणकर्मणि ।
[2]लाघवे तूलतुल्यत्वं लघिमानं विदुर्बुधाः ॥ ११ ॥

लघिमाख्यामाह—महामेरुसमाङ्गस्येति ॥ योगिनो विशेषणमेतत् । इच्छया अतिस्थूलतामापन्नस्य अन्यैः समुद्धरणे तूलतुल्यत्वं लघिमेत्यर्थः ॥ ११ ॥

(४) गरिमासिद्धिलक्षणम्–

परमाणुसमाङ्गस्य समुद्धरणकर्मणि ।
गौरवे मेरुतुल्यत्वं गरिमाणं विदुर्बुधाः ॥ १२ ॥

गरिमाख्यामाह—परमाणुसमाङ्गस्येति ॥ अस्यापि सर्ववैपरीत्येन योजना ॥ १२ ॥

---

(१). राडभीति पाठान्तरम् । (२). योगेन तू इति—योगिनस्तूलेति च पाठन्तरे ।

(५) प्राप्तिसिद्धिलक्षणम्—

पातालवासिनः पुंसो ब्रह्मलोकावलोकनम् ।
प्राप्तिर्नाम महैश्वर्यं सुदुष्प्रापमयोगिनाम्[1] ॥ १३ ॥

प्राप्त्याख्यमैश्वर्यं व्युत्पादयति—पातालवासिन इति ॥ १३ ॥

(६) प्राकाम्यसिद्धिलक्षणम्—

आकाशगमनादीनामन्यासां सिद्धिसम्पदाम् ।
स्वेच्छामात्रेण संसिद्धिः प्राकाम्यमभिधीयते ॥ १४ ॥

प्राकाम्याख्यां सिद्धिमाह—आकाशगमनादीनामिति ॥ १४ ॥

अथवा प्राकाश्यसिद्धिलक्षणम्—

स्वशरीरप्रकाशेन सर्वार्थानां प्रकाशनम् ।
प्राकाश्यमिदमैश्वर्यमिति केचित्प्रचक्षते ॥ १५ ॥

प्राकाश्यनामकमैश्वर्यमाह—स्वशरीरप्रकाशेनेति ॥ १५ ॥

(७) ईशित्वसिद्धिलक्षणम्—

स्वेच्छामात्रेण लोकानां सृष्टिस्थित्यन्तकर्तृता ।
सूर्यादीनां नियोक्तृत्वमीशित्वमभिधीयते ॥ १६ ॥

ईशित्वाख्यामाह—स्वेच्छामात्रेणेति ॥ "जगद्व्यापारवर्जम्[2]" इति न्यायेन यद्यपि विदुषो लोकविषये स्वातन्त्र्यं वारितं, तथापि विश्वामित्रादिवत् ब्रह्माण्डस्थितावेव वापीकूपतटाकनगरीवनगिरिविहारस्थलसृष्ट्याद्यभिप्रायमेतद्द्रष्टव्यम् ॥ १६ ॥

(१) ...यं दुष्प्र...मपि यो इ... पाठान्तरे । (२). ब्रह्मसू. ४।४।१७।

## (८) वशित्वसिद्धिलक्षणम्–

सलोकपालाः सर्वेपि लोकाः स्ववशवर्तिनः ।
तदैश्वर्यं वशित्वाख्यं सुलभं शिवयोगिनाम्[1] ॥१७॥

वशित्वमाह–सलोकपाला इति ॥ १७ ॥

यस्त्वेवं ब्राह्मणो वेत्ति तस्य देवा वशे स्थिताः ।
किम्पुनः क्ष्मापतिव्याघ्रव्यालस्त्रीपुरुषादयः ॥१८॥

शिवयोगिना[2]मुक्तमैश्वर्यं सुलभमित्यत्र प्रमाणभूतश्रुतिमुदाहरति–यस्त्वेवमिति ॥ 'यस्त्वैवं ब्राह्मणो विद्यात् । तस्य देवा असन्वशे[3]' इति मन्त्रस्वरूपस्य प्रतिनिर्देशोयम् । शिवयोगिनां सर्ववशित्वं कैमुत्यन्यायेनाह–किम्पुनरिति ॥ १८ ॥

सर्वात्मभावसाम्राज्यनिरन्तरितचेतसाम् ।
परिपक्वसमाधीनां किङ्किं नाम न सिद्ध्यति ॥१९॥

न परिगणितमैश्वर्यं सर्वात्मसदाशिवात्मध्याननिष्ठाफलं भवेत्, अपि तु सर्वमेव सदा भवेदेवेत्याह–सर्वात्मभावेति ॥१९॥

एतत्स्तोत्रपाठफले मोक्ष एवेच्छा कार्या–

स्तोत्रमेतत्पठेद्धीमान् सर्वात्मत्वं च भावयेत् ।
अर्वाचीने स्पृहां मुक्त्वा फले स्वर्गादिसम्भवे॥२०॥

यद्यप्येवं महिमास्य स्तोत्रस्य। तथापि न तेषु फलेष्वानुषङ्गिकेष्वपि मतिं कुर्यादिति प्राणिनो हितमुपदिशति–स्तोत्रमेतदिति ॥ २० ॥

---

(१). मं सर्वयो इति पाठान्तरम् । (२). सुरयो इति पाठान्तरम् ।
(३). तै. आ. ३–१३ ।

स्वर्गादिराज्यं साम्राज्यं मनुते न हि पण्डितः ।
तदेव तस्य साम्राज्यं यत्तु स्वाराज्यमात्मनि ॥२१॥

कुत इत्यपेक्षायामाह—स्वर्गादिराज्यं साम्राज्यमिति॥२१॥

सर्वात्मभावनावन्तं सेवन्ते सर्वसिद्धयः ।
तस्मादात्मनि साम्राज्यं कुर्यान्नियतमानसः ॥२२॥

स्वर्गादिराज्यं साम्राज्यं कस्मात् पण्डितोऽपि न मन्यते, तत्राह—सर्वात्मभावनावन्तमिति ॥ २२ ॥

एतत्स्तोत्रेधिकारः—

यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ ।
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः॥२३॥

देवे दक्षिणामूर्त्याख्ये, गुरौ च स्वे,—भक्तिमतः अस्मिन् स्तोत्रे अधिकारो, नान्यस्येति दर्शयति—यस्य देव इति ॥ श्रुतिरेवैषा ॥ २३ ॥

प्रकाशात्मिकया शक्त्या प्रकाशानां प्रभाकरः ।
प्रकाशयति यो विश्वं प्रकाशोयं प्रकाशताम् ॥२४॥

तदेवम् (इदानीम्) अशेषं स्तोत्रं तात्पर्यतो व्याख्याय ग्रन्थप्रचयविघ्नोपशान्तये शिष्टाचारलक्षणं मङ्गलं वस्तुनिर्देशात्मकमाचरति—प्रकाशात्मिकयेति ॥ आदित्यादिप्रकाशानामपि प्रभाकर इत्यर्थः । स्वयमेव प्रकाशतामित्यर्थः ॥ २४ ॥

इति श्रीदक्षिणामूर्तिस्तोत्रार्थप्रतिपादके ।
प्रबन्धे मानसोल्लासे दशमोल्लाससङ्ग्रहः॥२५॥१०॥

---

(१). [illegible]नुते इति पाठान्तरम् ।

# इति श्रीमच्छङ्करभगवत्पादाचार्यकृत-
# दक्षिणामूर्तिस्तोत्रभावार्थवार्तिकं
# सुरेश्वराचार्यकृतं समाप्तम् ॥

दशमश्लोकव्याख्यामुपसंहरति- इतीत्यादि ॥ २५ ॥

इति श्रीमानसोल्लासप्रबन्धोयं यथामति ।
व्याख्यातो रामतीर्थेन गुरुदेवप्रसादतः ॥ १ ॥
अनेन भगवाञ्छ्रीमद्दक्षिणामूर्तिरीश्वरः ।
गुर्वात्मा प्रीयतां नित्यं तत्त्वज्ञानप्रदः सताम् ॥ २ ॥

इति श्रीदक्षिणामूर्तिस्तोत्रव्याख्याप्रबन्धमानसो-
ल्लास(सङ्ग्रह)वृत्तान्त(विलास)ः समाप्तः ॥

ग्रन्थोयं संपूर्णः ॥

---

# अस्मत्प्रकाशितपुस्तकानां सूची.

| | रु. | आ. | पै. |
|---|---|---|---|
| १ पूर्वमीमांसादर्शनम्.-( सविषयाधिकरणम् ) | ० | १२ | ० |
| २ वैशेषिकदर्शनम्-( विषयानुक्रमयुतम् ) ... | ० | ३ | ० |
| ३ वैशेषिकदर्शनम्-( भाषाभाष्यम् ) ... | १ | ८ | ० |
| ४ ( वृहत् ) सांख्यदर्शनम्, ( लघु ) सांख्यदर्शनम् | ० | २ | ० |
| ५ पातञ्जलयोगदर्शनम् ... ... ... | ० | ९ | ० |
| ६ वेदान्तदर्शनम्-( मतांतरीयपाठान्तरादियुतम् ) | ० | २ | ० |
| ७ न्यायदर्शनम् टिप्पणसहितम्-(विषयानुक्रमयुतम्) | | २ | ० |
| ८ न्यायदर्शनम्-भाषाभाष्यम् ... ... | २ | ० | ० |
| ९ षट्र दर्शनानि ... ... ... ... | ६ | ४ | ० |
| १० पञ्चीकरणम्-( श्रीमच्छंकराचार्यविरचितम् ) श्री-मत्सुरेश्वराचार्यकृतवार्तिकस[illegible]रामनाथप्रणीतचंद्रिका-[illegible]संवलितं श्रीमदानन्दगिरिग्रंथितविवरणसमेतम्० | | ६ | ० |
| ११ वेदान्तसंज्ञाप्रकरणं सटीकम्... ... ... | ० | ४ | ० |
| १२ त्रिंशच्छ्लोकी सव्याख्या-( धर्मशास्त्रं ) [ विषय-सूचीसंहिता ] दशश्लोकी ( त्रिंशच्छ्लोकीपरिशिष्टभूता ) चतुःश्लोकी ( त्रिंशच्छ्लोकीपरिशिष्टभूता ) ... | ० | ६ | ० |
| १३ तर्कसंग्रहः सिद्धान्तचन्द्रोदयटीकासमेतः-(न्याय) | | ८ | [illegible] |
| १४ लक्षणावली-(न्यायः) ... ... ... | ० | २ | ० |
| १५ विवेकचूडामणिः मूलम्-( वेदान्तः ) ... | ० | ४ | ० |
| १६ पुष्टिमार्गीयस्तोत्ररत्नाकरः ( ८१ स्तोत्राणि सन्ति ) रेसमी ... ... ... ... ... ... | ० | ८ | ० |
| ,, ,, ,, साधी बायडिंग ... | ० | ६ | ० |
| १७ धातुमंजरी-( व्याकरणम् ) ... ... ... | १ | ० | ० |
| १८ ललितासहस्रनाम ( त्रिशतीनामादिस्तोत्राणि ) | १२ | ० | ० |
| १९ अनेकार्थनाममाला भाषा-( नंददासकृता ) | ० | १ | ० |
| २० बृहत्स्तोत्ररत्नाकरः-( स्तोत्रसं० १९० ) | १० | ० | ० |
| २१ हरिमीडेस्तोत्रम्-( गुजराती अर्थसाथे ) | १[illegible] | ० | ० |
| २२ आशौचनिर्णयः-( गुजराती अर्थसाथे ) ... | ० | [illegible] | [illegible] |

